卐

# धर्म कृत्योपयोगि-तिथ्यादिनिर्णयः कुम्भपर्व-निर्णयश्च

— लेखकौ —


पूज्य श्री करपात्रस्वामिनः

श्री मीठालाल हिम्मतराम ओझा

ज्योतिष-प्राध्यापक—वाराणसेय संस्कृत विश्वविद्यालयस्य


સમરીતિ ર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાઽજ્ઞાનમીનાચો વેદવેદ્યો મહામતિઃ॥
ankurnagpal108@gmail.com


—प्रकाशकः—

सन्तशरण वेदान्ती

प्रकाशकः —

सन्तशरण वेदान्ती, प्रचारमन्त्री
अखिल-भारतीय-धर्मसङ्घस्य
दुर्गाकुण्डम्, वाराणसी ।

●

प्रयाग-कुम्भपर्व
मौनी अमावस्या, २०२१ वै०
१ फरवरी : १९६५

●

प्रथमं संस्करणम् : २००० प्रतयः
मूल्यम् : पञ्चाशत् पणाः ( ५० पैसे )

[illegible]
[illegible]
ankurnagpal108@gmail.com

मुद्रकः
ब्र० नारायणस्वरूप द्विवेदी
सन्मार्ग प्रेस
वाराणसी

Scanned by CamScanner

# सम्पादकीय

कहते हैं, घर्षण हानिकर वस्तु होती है। किन्तु आस्तिक कर्मकाण्डी जानते हैं कि अरणियों के घर्षण से उस अग्नि का आविर्भाव होता है, जो सविधि उपासित होने पर होता को अनेकानेक लौकिक-पारलौकिक उत्कर्षों की चरम सीमा पर पहुँचाता है। वाद-संघर्ष का भी यही हाल है। प्रसिद्ध है कि 'वादे वादे जायते तत्त्वबोधः'। पता नहीं था कि कुम्भ का प्रकरण, अधिक-क्षयमासों का प्रकरण आदि के विवाद से हमारे आराध्य, तपःपूत, चिर शास्त्राध्ययनसायी विद्वानों के अन्तर में भी जातवेदा का आविर्भाव होगा और वह भारतीय संस्कृति के उपासकों को इस सम्बन्ध में अमूल्य दुर्लभ शास्त्र-निर्णय-रत्न को उपायन कर सच्चे अर्थ में 'होतारं रत्नधातमम्' बनेगा ?

इन प्रसङ्गों को लेकर अधिकारी विद्वानों की तत्तत् विषय पर लेखनी, भागीरथी की निर्मल धार-सी, बह चली। प्रस्तुत पुस्तक भी उसी त्रिवेणी की एक धार है। पूज्यपाद स्वामी श्रीकरपात्रीजी महाराजने वैसे कुम्भपर्व के सम्बन्ध में राष्ट्रभाषा में एक निबन्ध आज से करीब ६ वर्ष पूर्व उज्जयिनी-कुम्भ के अवसर पर लिखा था, जिसे तत्कालीन सभी धर्माचार्यों, धर्म-संस्थाओं एवं प्रमुख विद्वानों ने सर्वथा अनुमोदित किया। किन्तु इधर अधिक और क्षयमास को लेकर दृग्गणितवादियों ने प्राचीन सूर्यसिद्धान्तीय गणितवादियों से जो संघर्ष चलाया, वह सर्वविदित है। उस प्रसंग में काशिराज ने काशी के विद्वानों के माध्यम से अधिक क्षयमाससम्बन्धी शास्त्रीय मत और सूर्यसिद्धान्तीय मत की मौलिकता भलीभांति स्पष्ट कर दी। अब मुद्रित-मुख नवीनों को कुम्भ का विषय हाथ लगा और सौभाग्य या दुर्भाग्य से आपातग्राही और कुम्भ की द्वादशवार्षिकता से मुग्ध साधु-समाज के कतिपय वर्ग का बल भी मिल गया। इस पृष्ठभूमि का पूरा अनुगम कर पूज्य स्वामीजी ने एक वक्तव्य द्वारा शास्त्रीय कुम्भनिर्णय प्रकाशित कर साधु-समाज से अपना ऐकमत्य बनाये रखने की सौहार्दपूर्ण भावना व्यक्त की। किन्तु दुर्भाग्य से वह एकता सघन पायी, तब कुम्भसम्बन्धी नवीन गणितमत के खंडन के साथ धर्मानुष्ठान में नवीन दृश्य गणित की मर्यादा को भी स्पष्ट कर देना आवश्यक हो गया। उन लोगों के इस सम्बन्ध के अनेक वक्तव्य, पुस्तकें भी प्रकाशित थीं, जिनका

उत्तर देना भी आवश्यक हो गया। साथ ही अपनी निर्धारित प्रणाली के अनुसार किसी विषय के शास्त्रीय निर्णय को निर्भीकता से स्पष्ट करना और उसे कार्यान्वित भी कर दिखाना था। इसी सन्दर्भ में [illegible] में तीनों पीठों के शङ्कराचार्यों के सान्निध्य में और पाँच-छह पीठों के शङ्कराचार्यों के अनुमोदन में बृहत् ज्योतिष-सम्मेलन एवं कुम्भपर्व-सम्मेलन हुए, जिनमें दोनों पक्षों ने जमकर विचार किया और वास्तविक शास्त्रार्थ-निर्णय प्रकट हुआ। आज तीर्थराज में महाकुम्भ का आयोजन भी इसी प्रयास का एक अंग है।

इस सारे उद्यम का ठोस और स्थायी परिणाम यह पुस्तक है, जिसे पूज्य स्वामीजी ने अपने विचरणव्यस्त कार्यक्रम के बीच भी किसी तरह पूरा कर लिया। अतएव हाथ लगते ही केवल ३-४ दिनों के बीच प्रकाशित कर जनता-जनार्दन को समर्पित करना हमारा भी कर्तव्य हो गया। इस भाग-दौड़ में अनेक कमियाँ रह जाना सम्भव है और इसे जिस रूप में देना सोचा जा रहा था, वह भी नहीं बन पाया। पृष्ठ-संख्या भी अलग-अलग देनी पड़ी, एतदर्थ हम कृपालु पाठकों से क्षमाप्रार्थी हैं।

इस ग्रन्थ में प्रथम पूज्य स्वामीजी का नव निबन्ध है, फिर वाराणसेय संस्कृत विश्वविद्यालय के ज्योतिष-विभाग के प्राध्यापक श्री मीठालाल ओझा का मार्मिक निबन्ध, पश्चात् स्वामीजी का प्राचीन 'महाकुम्भ-निर्णय' और वक्तव्य संकलित कर दिया गया है। कुल मिलाकर यह विषय का सर्वाङ्गपूर्ण चित्र खड़ा करने में अवश्य सहायक हो सकता है, ऐसा हम मानते हैं। अब अधिक न लिखकर यह अमूल्य ज्ञानराशि प्रदान करने के लिए पूज्य स्वामीजी महाराज के पावन चरणों में नतमस्तक हो तथा श्री ओझाजी एवं प्रकाशक श्री सन्तशरण वेदान्ती एवं मुद्रक सन्मार्ग प्रेस के व्यवस्थापक ब्रह्मचारी श्री नारायणस्वरूप द्विवेदी की विद्वत्ता एवं धर्मनिष्ठा और अद्भुत कार्यप्रवणता का गौरव करते हुए विज्ञ पाठकों को इस प्रेम से अपनाने की प्रार्थना करते हैं।

मौनी अमावास्या २०२१ वै०

—गोविन्द नरहरि वैजापुरकर

॥ श्रीहरिः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

व्रतोपवासकुम्भाद्याः भारतीसंस्कृतेः कलाः ।
निरूपयितुमेवात्र निबन्धोऽयं वितन्यते ॥ २ ॥

अथेदानीं पञ्चाङ्गेषु वैमत्यदर्शनेन तेषु तेषु व्रतोपवासादिषु अधिकक्षयमास-कुम्भादिपर्वसु च वैमत्यप्रचारेण महान् कोलाहलो दृश्यते । तस्मात्तदाश्रित्यैव किञ्चिद्विचार्यते—प्राधान्येन पञ्चाङ्गं द्वैविध्यमधुना दृश्यते । दृग्गणितपक्ष-माश्रित्य एकविधम् , सूर्यसिद्धान्तादिपक्षमाश्रित्य चान्यादृशम् । तत्र प्रथमेऽपि चित्रारैवतपक्षमाश्रित्य गणितभेदेन नैकविधानि पञ्चाङ्गानि भवन्ति । सूर्यसिद्धान्त-ग्रहलाघवमकरन्दाद्यनुसारेण अपरमपि अनेकविधम् ।

केचित्–सूर्यचन्द्रान्तरलक्षणेन कलालक्षणभेदेन च तिथिद्वैविध्यं वदन्ति । तथा हि—चन्द्रसूर्ययोर्द्वादशान्तरगतेरेककलावृद्धेश्च न साम्यमेव सर्वदेति नियमः । कलावृद्धिश्च द्वादशान्तरसमकालमेवेति न नियमः । द्वादशान्तरकलाप्रपूर्त्योश्च कालतो वैषम्यात् । अत एव विष्णुधर्मोत्तरे—

'आदित्याद्विप्रकृष्टस्तु भागद्वादशकं यदा ।
चन्द्रमाः स्यात्तदा राम तिथिरित्यभिधीयते ॥'

इति कलात्मकतिथिवत् द्वादशान्तरलक्षणा तिथिः स्पष्टमुक्ता । सर्वथाऽप्येकं सूर्य-चन्द्रयोर्द्वादशान्तरप्राधान्येन, अपरं तु कलाप्राधान्येन तिथिनिर्माणम् ।

अन्ये तु—प्रात्यहिकचलसंस्कारसंस्कृतस्य चन्द्रस्य ( नाटिकल-चन्द्रस्य ) रवेश्च क्रान्तिवृत्तीयमन्तरं नवीनं द्वादशान्तरमिति नाम दीयते । 'पूर्णिमाचन्द्रबिम्बस्य रवेश्च पञ्चदशकलारूपदर्शनयोग्यप्रात्यहिकचलसंस्काररहितस्य कल्पितचन्द्रस्य रवेश्च क्रान्तिवृत्तीयं प्राचीनद्वादशान्तरमेव कलारूपमपि' इति तिथिस्वरूपनिर्णये ।

तत्र दृग्गणितवादिनः प्रत्यवतिष्ठन्ते—

'यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम् ।
दृश्यते तेन पक्षेण कुर्यात्तिथ्यादिनिर्णयम् ॥'

इति दृग्गणितस्यैवादरस्तत्र तत्र दृश्यते ।

'प्रतिदिवसविसंवादात् तिथिकरणर्क्षदिवसमासानाम् ।
ग्रहणग्रहयोगादिषु पादं पादेन कः स्पृशति ॥'

इत्याचार्यब्रह्मगुप्तस्तु पादेनापि दृक्समत्वानापादकं गणितं न स्प्रष्टुमिच्छति ।

'तन्त्रभ्रंशे प्रतिदिनमेव विज्ञाय धीमता यत्नः ।
कार्यस्तस्मिन् यस्मिन् दृग्गणितैक्यं सदा भवति ॥'

इति ग्रहलाघवकारैश्चायमेव पक्षः समर्थितः ।

'सौरोऽर्कोऽपि विधूच्चमङ्कलिको नाब्जो गुरुस्त्वार्यजो-
ऽसृग्राहू च कजं ज्ञकेन्द्रकमथार्ये सेषुभागः शनिः ।
शौक्रं केन्द्रमथार्यमध्यगमितीमे यान्ति दृक्तुल्यतां
सिद्धैस्तैरिह पर्व-धर्म-नयसत्कार्यादिकं त्वादिशेत् ॥'

मल्लारिश्च तत्रैव—यस्मिन् यस्मिन् काले यद्यद् दृग्गणितैक्यकृत् तदेव ग्राह्यं घटमानत्वात् ।

'तत्तद्गतिवशान्नित्यं यथा दृक्तुल्यतां ग्रहाः ।
प्रयान्ति तत्प्रवक्ष्यामि स्फुटीकरणमादरात् ॥'

एतेन सूर्यसिद्धान्तस्यापि दृग्गणितमभीष्टमेव ।

'स्फुटं दृक्तुल्यतां गच्छेदयने विषुवद्द्वये ।
प्राक् चक्रं चलितं हीने छायार्कात् करणागते ।
अन्तरांशैरथावृत्य पश्चाच्छेषैरथाधिके ॥'

अन्यत्रापि समस्तधर्मकार्यार्थं दृग्गणितमिष्यते । यथाह भास्करः—

'यात्राविवाहोत्सवजातकादौ खेटैः स्फुटैरेव फलस्फुटत्वम् ।
स्यात् प्रोच्यते तेन नभश्चराणां स्फुटक्रिया दृग्गणितैक्यकृद्या ॥'

यद्यपि सूर्यसिद्धान्तस्य बीजोपनयनाध्यायः सूर्यांशोक्तापेक्षया प्रक्षिप्तः, तथापि मयकृते सूर्यसिद्धान्ते सोऽप्रक्षिप्त एव । तत्र च—

'कालेन दृक्समो यः स्यात् ततो बीजक्रियोच्यते ।
बीजं विशेषसिद्धान्तरहस्यं परमं स्फुटम् ।
यात्रापाणिग्रहादीनां कार्याणां शुभसिद्धिदम् ॥'

वराहमिहिरोऽपि—

'पूर्वाचार्यमतेभ्यो यद्यच्छ्रेष्ठं लघु स्फुटं बीजम् ।
तत्तदिहाविकलमहरहरस्म्यभ्युद्यतो वक्तुम् ॥'

मकरन्दानुसारिपञ्चाङ्गेऽपि बीजसंस्कारः क्रियते । यस्मिन् तन्त्रे सदा दृग्गणितं भवति, तदेव तन्त्रमादरणीयमिति महामहोपाध्याय-श्रीसुधाकरद्विवेदिनाऽपि ब्रह्मगुप्तस्य तन्त्रभ्रंशव्याख्यायामुक्तम्' इति चेद्,

अत्रोच्यते—विषयविशेषे व्यवस्थितया दृग्गणितविधायकवचनानां समन्वयेन अदोषात् । अत एव भास्कराचार्याः—'यात्राविवाहोत्सवजातकादौ खेटैः स्फुटैरेव फलस्फुटत्वम्' इति विशेषविषयेण वाक्येन दृग्गणितैक्यकृत्स्फुटक्रिया यात्राविवाहोत्सवादिविशेषविषयेष्वेव ग्राह्या, न तु धर्मशास्त्रोपयोगितिथ्यानयने' इति ।

एतेन—'सर्वविधधर्मकार्येषु दृग्गणितं युज्यते' इति निरस्तम्; यात्राविवाहादिविशिष्टनिर्देशानुपपत्तेः, धर्मसामान्यानुक्तेर्निषेधवचनविरोधाच्च । तेनैव च श्रीमता भास्कराचार्येण यात्राविवाहादावपि स्थूलसूक्ष्मभेदेन नक्षत्रादिगणनाया द्वैविध्यस्याङ्गीकृतत्वात्—

'स्थूलं कृतं भानयनं यदेतज्ज्योतिर्विदां संव्यवहारहेतोः ।
सूक्ष्मं प्रवक्ष्येऽथ मुनिप्रणीतं विवाहयात्रादिफलप्रसिद्ध्यै ॥' इति ।

दृग्गणितस्य वस्तुतः स्थूलत्वमेव अत्रोक्तम् । सूक्ष्मत्वं तु पुलस्त्य-वशिष्ठ-गर्गादिभिर्यत्कथितं तदेव, प्रत्यक्षानुमानागम्यस्य शास्त्रैकगम्यस्यैव सूक्ष्मत्वात् । अत एव तत्र वासनाकारः स्पष्टं वक्ति—'इह यन्नक्षत्रानयनं कृतं तत्स्थूलं लोकव्यवहारमात्रार्थं कृतम् । पुलस्त्य-वशिष्ठ-गर्गादिभिर्यद्विवाहयात्रादौ सम्यक्फलसिद्ध्यर्थं कथितं सूक्ष्ममिदानीं प्रवक्ष्ये' इति । एतेन केषुचित्कर्मसु दृक्तुल्यग्रहाणां केषुचिच्च दृक्तुल्यतारहितस्पष्टग्रहाणामुपयोगः ।

'भास्कराचार्याणामयमेवाशय' इति नृसिंहदैवज्ञोऽपि । 'ततो धर्मशास्त्राद्युपयुक्ततिथिसाधनं नक्षत्रयोगकरणज्ञानञ्चोक्तम्' इति तिथिस्वरूपनिर्णयेऽपि ।

पाण्डुरङ्गशास्त्रिणस्तु इत्थमभिप्रयन्ति—"दर्शपूर्णमासाभ्यां यजेत,' 'वसन्ते ब्राह्मणोऽग्नीनादधीत', 'सायं जुहोति', 'प्रातर्जुहोति' 'चतसृष्वष्टमीषु अष्टकाः कुर्यात्' इत्येवमादिभिः । श्रौतैर्वचनैः मासर्त्वयनतिथिनक्षत्रादिकालस्य कर्माङ्गता विज्ञायते ।

'मासपक्षतिथीनां च निमित्तानाञ्च सवशः ।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥'

इति निर्णयसिन्धु-व्याख्या ( पृष्ठ ३४ ) -वचनेन च काल-विशेषः कर्माङ्गं विज्ञेयः । स च कालः वेदधर्मशास्त्रीयपरम्परानुसारी एवोपयुज्यते, नाधुनिक-भारतीयपरम्परानुसारी । तत्र च 'वेदमासो धृतव्रतो द्वादश प्रजावतः' ( ऋक्० १।२५।८ ), 'द्वादशमासाः संवत्सरः' ( तैत्तिरीय संहिता ५।६।७ ) इत्यादिभिः द्वादशमासात्मकं वर्षं प्रतीयते । 'तस्मादादित्यः षण्मासो दक्षिणेनैति षडुत्तरेण' ( श० ब्रा० २।१।३ ), 'उदगयने प्रमीयते अथ यो दक्षिणे प्रमीयते' ( ना० उ० अनु० ८० ), 'उदगयने आपूर्यमाणपक्षे' ( आश्वलायन गृह्यसूत्र १।४।१ ), 'उभे अयने षड् वा ऋतवः संवत्सरः' इत्यादिवचनैरयनत्वादीनामपि 'चन्द्रमाः षड् होता, स ऋतून् कल्पयति' इति चान्द्रर्तुस्मरणम् ।

'श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु ।
तदलाभे तु सारर्तुष्विति ज्योतिर्विदां मतम् ॥'

इति (त्रिकाण्डमण्डने ), 'पौर्णमासान् सम्पाद्य, अमावास्यामासान् सम्पाद्य' ( तैत्तिरीयब्रा० ७।६।५।३९ ) इत्यादिरीत्या दर्शान्तपूर्णिमान्तेति द्विविधमास-कल्पना । 'मासो वै प्रजापतिः, तस्य शुक्लपक्ष एव रयिः, कृष्णः प्राणः, त्रीणि च वै शतानि षष्ठिश्च संवत्सरस्याहानि' (ऐ० ब्रा० ७।१७) इत्यादिना सावन-वर्षदिनानि 'पूर्वाह्णो वै देवानाम्, मध्यन्दिनो मनुष्याणाम्, अपराह्णः पितृणाम्' (श० ब्रा० २। ४। २। ८) इत्यादिना दिवसस्य भागत्रयम्, एवं प्रातःसङ्गवादयः पञ्च विभागाः, अहोरात्रयोः प्रत्येकं पञ्चदश मुहूर्ता अपि तैत्तिरीयश्रुत्या (१।५।३), 'अस्ति त्रयोदशो मास इत्याहुस्तदेव तत्प्रीणाति, तं त्रयोदशान्मासात् अक्रीणंस्तस्मात् त्रयोदशो मासो नानुविद्यते' ( ऐतरेय ब्रा० ३।१), 'द्वादश वा त्रयोदश वा मासाः संवत्सरस्य' (श०ब्रा० ५।४।२, ५।४।७) इति चान्द्रसौरसम-न्वयलक्षणा अधिकमासकल्पनापि । 'अग्नेर्नः पातु कृत्तिकाः' ( तैत्तिरीय ब्रा०

३।१।१।२ ) इति संख्याबोधकनक्षत्रनामदर्शनात् तथा 'यत्पुण्यं नक्षत्रं तद् बहु कुर्वीतोपव्युषम्, 'यदा वै सूर्य उदेति, अथ नक्षत्रं नैति' इत्यादिश्रुतिप्रामाण्यात् 'तारकात्मकं नक्षत्रविज्ञानम्' इत्यादिरूपा भारतीयपरम्परा प्रसिद्धा। अत्र सर्वत्र धर्मशास्त्रसम्बन्धे, आङ्ग्लादिदेशीया स्वतन्त्रा वा काचित्कालगणना नास्ति।

'तिथिनक्षत्रयोगादिसाधनं पुण्यपापयोः' इति गर्गवचनात् विशेषतस्तिथ्यादीनां कर्माङ्गतया ग्रहणम्। तिथिस्वरूपविषये 'नवो नवो भवति जायमानः,' 'अह्नां केतुः' इति ऋचा 'अयं चन्द्रमा जायमानः प्रतिदिनमेकैककलाभिरपेयेन वर्धमानः सन् नवो नवो भवति प्रतिदिनम्' इति सायणभाष्येण च प्रतिपदादीनां चन्द्रकलाह्रासविध्यधीनत्वम्। 'स एष संवत्सरः प्रजापतिः षोडशकलः, तस्य रात्रय एव पञ्चदश कलाः, ध्रुवैवास्य षोडशी कला। स रात्रिभिरेवापूर्यते, अपक्षीयते, सोऽमावास्यां रात्रिम् एतया षोडशया कलया सर्वं प्राणभृदनुप्रविश्य ततः प्रातर्जायते' ( बृ० आ० १।५ )—

[ 'स एष संवत्सरः योऽयं यज्ञात्मा प्रजापतिः प्रकृतः, स एष संवत्सरात्मना विशेषतो निर्दिश्यते। 'संवत्सरो वै प्रजापतिः' ( ऐ० ब्रा० ३।२।७ ), 'चन्द्रमा वै संवत्सरः' ( शत० ८।१।२ ) इति श्रुतिभ्यां संवत्सरस्य प्रजापतित्वं चन्द्ररूपत्वञ्च बोद्धव्यम्। तस्य कालात्मनः प्रजापतेः रात्र्यण्यहोरात्राण्येव तिथय इत्यर्थः। पञ्चदश कलाः ध्रुवैव नित्यैव व्यवस्थिता अस्य प्रजापतेः षोडशी, षोडशानां पूरणी कला। स रात्रिभिरेव तिथिभिरेव कलोक्ताभिरापूर्यते, अपक्षीयते च। प्रतिपदाद्यादिभिः चन्द्रमाः प्रजापतिः शुक्लपक्षे आपूर्यते कलाभिरुपचीयमानाभिर्वर्धते यावत्सम्पूर्णमण्डलः पौर्णमास्याम्। ताभिरेव अपचीयमानाभिरपक्षीयते कृष्णपक्षे। यावद् ध्रुवैका कलाऽमावास्यायाम्' इति शाङ्करभाष्यम्। ]

एतैर्वचनैश्चन्द्रकलाह्रासवृद्ध्यधीना तिथयश्चन्द्रकला एव। तदुक्तं स्कान्दे महापुराणे प्रभासखण्डे—

'अमा षोडशभागेन देवि प्रोक्ता महाकला।
संस्थिता परमा माया देहिनां देहधारिणी॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः।
तिथयस्ताः समाख्याता षोडशैव वरानने॥

कालमाधवेऽपि—'तनोति विस्तारयति वर्धमानां क्षीयमाणां वा चन्द्र-कलामेकां यः कालविशेषः सा तिथिः, 'तन्यन्ते कलया यस्मात्तस्मात् तास्तिथयः स्मृताः' इति सिद्धान्तशिरोमणिवचनात् ।' वीरमित्रोदये समयप्रकाशेऽपि—'तत्र तिथिर्नाम अमासंज्ञक-सर्वानुस्यूत-नित्यकलाव्यतिरिक्तानां प्रतिपद्द्वितीयादि-संज्ञानां पञ्चदशकलानां मध्ये एकैकस्याः कलायाश्चन्द्रमण्डलस्य सूर्यमण्डलेन सह परमसन्निकर्षानन्तरं विप्रकर्षः, परमविप्रकर्षानन्तरं सन्निकर्षो वा यावता कालेन भवति, तावान् कालो यथाक्रमं शुक्लकृष्णपक्षगतो निरूढलक्षणया प्रतिपद्-द्वितीयादिशब्दैः प्रतिपाद्यः ।

एतासां चन्द्रकलानां वह्न्यादयो देवताः कृष्णपक्षे पानं कुर्वन्ति, शुक्लपक्षे च तासामाप्यायनम् । यथा—'यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनः' (ऋ० सं० १०।८।५), 'यमादित्या अंशुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति' (तै० सं० २।४।१४) इति ।

> 'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः ।
> विश्वेदेवास्तृतीयां तु चतुर्थीं सलिलाधिपः ॥' इति वाराहपुराणे ।

एतत्पानमपि दर्शनरूपमेव । 'न ह्येव देवा अश्नुवन्ति पिबन्ति वा, एतमेव दृष्ट्वा तृप्यन्ति' (बृ० आ० १।६) इति वचनात् ।

सूर्यसिद्धान्तरीत्या—

> 'अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी ।
> तच्चन्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः ॥'

इत्युक्त्यनुसारं सूर्यमण्डलस्याधःप्रदेशवर्ती शीघ्रगामी चन्द्रः सूर्याद्विनिःसृतः त्रिंशदंशोपेतराशौ द्वादशभिरंशैः सूर्यमुल्लङ्घ्य प्राच्यां याति । तदा चन्द्रबिम्बस्य पञ्चदशसु भागेषु प्रथमो भागः दर्शनयोग्यो भवति ।

यद्यपि अत्र चन्द्रकलानां सूर्ये प्रवेशनिर्गमौ प्रतीयेते, सोमोत्पत्त्यादौ तु वह्न्यादिदेवतासु; तथापि अस्मदादिदर्शनापेक्षया ज्योतिःशास्त्रस्य प्रवृत्तत्वात् कलापानस्य च दर्शनरूपत्वात् न विरोधः । अत एव कालमाधवे—'यद्यपि सूर्ये प्रवेशनिर्गमौ यदि वा वह्न्यादिदेवतासु सर्वथापि कलाप्रयुक्ता एव तिथय इत्यवगन्तव्यम्' इति ।

यद्यपि सूर्याचन्द्रमसोर्द्वादशान्तरमानेनैव आधुनिकैरपि तिथयो निर्मीयन्ते। पौर्णमास्यां पञ्चदश कला भवन्ति। तदानीं षड्राशिमितं नामाशीत्यधिकैकशतांश-परिमितं सूर्याचन्द्रमसोरन्तरं भवति, तस्य पञ्चदशो भागः १५×१२ द्वादशान्तर-परिमित एव भवति। सैव चैका कला; तथापि विशेषोऽत्र बोद्धव्यः। तथा हि—कलाशब्दस्य अवयववाचकत्वेन 'तस्य रात्रय एव पञ्चदश कलाः' इति श्रुतेः तत्र सम्पूर्णचन्द्रमण्डलस्य यो नृदृश्योऽर्धभागः, तस्यैकः पञ्चदशो भागः कला। भागस्तु भाज्यवस्तुनः कश्चिदिष्टः कल्पितोंऽशः। असमानत्वबोधकपदाभावे भागास्तु समाना एव ग्राह्याः। तच्च तुल्यत्वं समानत्वं वा तदैव स्यात् यदैकस्यैव संपूर्णस्य वस्तुनस्ते समाना अंशाः कल्पिता भवेयुः। न चान्यान्यवस्तुनो विभागाः परस्परं समाना उच्यन्ते। तथा च कलारूपः सम्पूर्णचन्द्रमण्डलस्य चन्द्रस्य पञ्चदशोंऽशः एकस्यैव पूर्णमण्डलस्य भवितुं युक्तः। एकवस्तुविभागपूरण एव द्वितीयादि-पूरणप्रत्ययोऽपि सङ्गच्छते। तथा च यस्य बिम्बस्य प्रथमकलारूपा प्रतिपद्, तस्यैव द्वितीयकलारूपा द्वितीया। तथा च पूर्णिमापूर्णचन्द्रबिम्बस्य पञ्चदशांशरूपकला-कल्पने भाज्यतया स्वीकरणीयं चन्द्रबिम्बं सर्वेषामपि कलाविभागानां कल्पनासमये एकरूपस्थितमेव भवितुमर्हति। भिन्नरूपस्थितस्य तस्य भागकल्पने तु परस्परं प्रमाण-तुल्यताया अभावेन तासां तादृक् समभागत्वासिद्धेः। 'स एव प्रजापतिः, तस्य रात्रय' इति श्रुतौ 'स' 'तस्ये'ति पदाभ्यामेकस्यैव तस्य पञ्चदशाहोरात्राणि अव-यवाः प्रतीयन्ते।

तथा च एकस्यैव सम्पूर्णमण्डलस्य पौर्णमासी चन्द्रस्य समानाः पञ्चदश विभागाः कलापदवाच्या भवन्ति। पौर्णमासीचन्द्रबिम्बं नेतरासु तिथिषु तादृश-मवतिष्ठते। प्रत्यहं प्रवहादिवायुसंस्कारवशात् तथाकर्षणादिविभिन्नहेतुवशाच्च तत्र न्यूनाधिकता स्पष्टं दृश्यते। तादृशस्य प्रात्यहिकचन्द्रमण्डलस्य भिन्नरूपस्य पञ्चदशोंऽशो यदि कलात्वेन कल्प्येत, तर्हि प्रतिपदि कल्पितः पञ्चदशोंऽशः, द्वितीयायां तृतीयायां वा कल्पितोंऽशः पृथक्परिमाणतां लभेत। तत्र भाज्यतया-ङ्गीकृतस्य प्रात्यहिकैरनियतसंस्कारैः संस्कृतस्य गणितागतप्रात्यहिकचन्द्रमण्डलस्या-नियतपरिमाणत्वात्। तथा च न तस्य पूर्णिमापूर्णचन्द्रबिम्बस्य कलारूपत्वं सम्भवति। अतस्तेषु प्रात्यहिकद्वितीयादिचन्द्रबिम्बेषु सम्पूर्णचन्द्रमण्डलचन्द्रबिम्बं परिकल्प्य तस्य रवेश्च द्वादशान्तरमानेन गणितशास्त्रपद्धत्या या याः कला (द्वादशान्तरवेद्याः)

दर्शनयोग्या यावता कालेन भवेयुः, स कालः कलापर्यायतिथिपदवाच्यः । स एव धर्मशास्त्रकृत्येषु ग्राह्यः ।

ननु प्रत्यक्षदृश्यमपहाय तत्र तत्र पूर्णबिम्बकल्पनं व्यर्थमिति चेन्न । गति-विशिष्टानां वस्तूनां गतिपरिमाणज्ञानस्य स्थिरपदार्थाश्रयणसापेक्षत्वेन सार्थ-क्यात् । यथा दिनारंभः सूर्योदयाश्रयेण । तत्र कस्मात् सूर्योदयात् द्वितीयसूर्योदय-पर्यन्तं दिवसस्यानियतमानत्वेन अहर्गणादिपरिमाणार्थं प्रात्यहिकरविस्थाने मध्यम-मानमितं कल्पितं स्थिरं रविमाश्रित्य अहर्गणादि विज्ञाय गणितं कर्तव्यं भवति । तदुक्तं सिद्धान्तशिरोमणौ– 'अहर्गणो मध्यमसावनेन कृतश्चलत्वात् स्फुटसाव-नस्य ।' तथैवात्र चलं प्रात्यहिकं चन्द्रं त्यक्त्वा स्थिरं कल्पितं सम्पूर्णचन्द्रमण्डल-माश्रित्य तिथ्यादिनिर्णयः कर्तव्यः । तदुक्तं पुरुषार्थचिन्तामणिकारेण–'सूर्याधिकच-न्द्रराश्यन्तादभिमत्रयोदशांशप्रवेशस्तु अतिशीघ्रगतौ चतुष्पञ्चाशद्घटिकाभिर्भवति, अतिमन्दगतौ च पञ्चाधिकषष्ठिघटिकाभिर्भवतीति । अत एव वैखानससंहितायाम् इदं पठ्यते----

> रवीन्दुमन्दसंसिद्धतत्तत्तिथ्यादियोगतः ।
> स्यातां तत्कालबीजोत्थौ बाणवृद्धिरसक्षयौ ॥
> अतः पैतृककर्मादौ तत्कालचरवीजकैः ।
> बाणवृद्धा रसक्षीणा ग्राह्या नान्या तिथिः क्वचित् ॥' इति ।

पैतृकेत्यनेन सर्वाणि धर्मकार्याणि ज्ञेयानि, आदिशब्दोपादानात् । वैखानससंहितोक्त-वचनस्य तथा 'मान्दैककर्मसंसिद्धव्यर्केन्दूत्पादिता तिथिः' इत्यादिवचनानां 'स एव संवत्सरः प्रजापतिः रात्रय एव पञ्चदश कलाः' इत्यादिश्रुतिमूलकत्वेन तथाकल्प-नस्यैव युक्तत्वात् । तेन पौर्णमासीपूर्णबिम्बस्य पञ्चदशांशरूपं कलाप्रमाणम्; तदेव तिथिस्वरूपम्, धर्मशास्त्रोक्तव्रतोपवास-दानसंस्कार-होमप्रायश्चित्तादिविधिषु कर्माङ्गतयाऽवगन्तव्यम् ।

अत्र केचित्---अस्मदीयपञ्चाङ्गानुसारेण रविचन्द्रयोर्ग्रहणानि सूक्ष्मतया प्रत्यक्षगोचरतामापद्यन्ते । चन्द्रोदयकालोऽपि तथैव भाति, यथा गुरुशुक्रादिग्रहाणा-मुदयास्तौ । ग्रहनक्षत्रयुत्यादयश्च नव्यपञ्चाङ्गोल्लिखिता एव सत्यत्वेन भासन्ते । अतस्तदीयास्तिथयोऽपि दृक्प्रत्ययुक्ता एव ग्राह्याः । नक्षत्राणि योगाश्च धर्म-

शास्त्रोक्तकर्मस्वपि न एव ग्राह्याः।' परमेतया सरण्या विरचितास्तिथयः न कला-
पदवाच्याः बाणवृद्धिरसक्षयेति धर्मशास्त्रज्योतिषशास्त्रसिद्धांताननुसरणात्।

ननु शास्त्रप्रामाण्यादेव प्रत्यक्षं त्यक्त्वा कल्पिताश्रयणेन बाणवृद्धिरसक्षय-
सिद्धान्ताश्रयणं न युक्तमिति चेन्न। शास्त्रप्रामाण्येन प्रत्यक्षत्यागस्य कल्पिताश्रयणस्य
चान्यत्रापि प्रामाणत्वात्। तथा हि—

'यां तिथिं समनुप्राप्य उदयं याति भास्करः।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु॥'

इति शास्त्रप्रमाणेनैव प्रत्यक्षमविद्यमानाऽपि तदानीमस्तीति कल्पिततिथिमाश्रित्य
दानाध्ययनादिधर्मकार्यानुष्ठानं भवति। किञ्च—

'सायनांशः स्फुटो भानुर्गोले चरति सर्वदा।' (सि० शि०)

इति निर्दिष्टं प्रत्यक्षदृश्यं ग्रहाणां सायनमनादृत्य धर्मकृत्येषु निरयणमङ्गा-
क्रियते। यद्यपि निरयणं न प्रत्यक्षदृश्यम्, किन्तु अयनादि संस्कारादेव तत्सिद्ध्यति
अयनांशा अपि स्वस्वाग्रहत्यनुसारेण भिन्नपरिमाणाः भवन्ति—केचित् १६,
केचिच्च २३ इति। निरयणग्रहा अपि भिन्नपरिमाणाः कल्पिता एव, तथापि
श्रुत्यादिपरम्परासिद्धत्वेन धर्मकार्येषु फलितमुहूर्तादौ च त एवाङ्गीक्रियन्ते।
एवं ग्रहणादौ, ग्रस्तास्ते, ग्रहणे च विनैव चाक्षुषं दृक्प्रत्ययं गणितशास्त्रेणैव
स्पर्शमोक्षकालौ विज्ञाय 'राहूपरागे स्नायात्', 'मुक्तौ स्नानं समाचरेत्' इति
शास्त्रवचनानां कल्पितस्पर्शमोक्षानाश्रित्यैव प्रवृत्तिः।

किञ्च—यद्यपि तिथीनां दृक्प्रत्ययार्थं लम्बनसंस्कारा अपेक्षिताः भवन्ति;
तथापि दृग्गणितपञ्चाङ्गेषु लम्बनसंस्कृतास्तिथयो न लिख्यन्ते। किन्तु भूमध्यवेध-
साधिता एव। न च ता भूपृष्ठानां दृक्प्रत्ययावहाः, तथापि ताभिर्व्यवहारा
भवन्ति। तथैव कल्पितोऽप्ययं चन्द्रो मन्दफलादिसर्वसंस्कारसंस्कृतत्वात् न मध्यमः,
किन्तु स्पष्ट एव। कल्पितत्वेऽपि निरयणग्रहाणां स्फुटत्ववदिति।

ननु कल्पितचन्द्रानुरोधेन तिथितत्त्वाङ्गीकारे प्रत्यक्षदृष्टाः कलास्ताभ्यो भिद्ये-
रन्। तथा च प्रत्यक्षदृश्यचन्द्रस्यैव वास्तविकत्वेन 'यस्मिन् पक्षे यत्र काले येन
दृग्गणितैक्यकम्' इत्यादिदृक्प्रत्ययबोधकवचनविरोध इति चेन्न। नवीनगणिता-
गताम् तिथिष्वपि तदसम्भवात्। तथा हि—नायमाकाशे दृश्यश्चन्द्रो वास्तविकः,

किन्तु चन्द्रमण्डलस्य भित्तौ विरचितालेख्यवत् प्रतिबिम्बरूप एव । अत एव 'चन्द्रस्य शुक्लमित्यभि'धीयते । तस्मिन् प्रतिबिम्बरूपे शुक्ले गोलगतस्तदीयोच्चनीचत्वादयः सकला विभागा न दृश्यन्ते । यथा ग्रीष्मे रविकिरणैर्भासमानो गिरिकूट-धवलवर्णः साधारणाकार एव दृश्यते, तत्रत्योच्चनीचत्वादिसहितं गर्तपाषाणादिकं न दृश्यते, तद्वत् प्रकृतेऽपि बोध्यम् । यदि चन्द्रशुक्लयोर्वास्तवमैक्यं स्यात्, तदा नृदृश्यस्यार्धस्य अर्धे दृश्यमाने सार्धसप्त तिथयो भवेयुः । तदा रविचन्द्रयोरन्तरं तु. ७½ × १२=९० नवत्यंशपरिमितं भवितुमर्हति । परं न तत्तथा, किन्तु ८५।४५ पादोनषड्ङ्काष्टांशपरिमितमेव भवति । भास्कराचार्याः सिद्धान्त-शिरोमणौ गोलाध्याये प्राहुः—

> 'कक्षा चतुर्थे तरणेर्हि चन्द्रकणान्तिरे तिर्यगिनो यतोऽब्जात् ।
> पादोनषट्काष्टलवान्तरेऽतो दलं नृदृश्यस्य दलस्य शुक्लम् ॥'

अत एव कालमाधवे—'सेयं द्वादशभिरंशैः सूर्यमुल्लङ्घितवती चन्द्रस्य प्रथमा कला, शृङ्गद्वयोपेता सूक्ष्मरेखाकारा शौक्ल्यम् ईषदुपयाति' इति ।

केतकरीये ज्योतिर्गणितेऽपि शुक्लप्रतिपदि द्वितीयायाञ्च तथा कृष्णत्रयोदश्यां चतुर्दश्याञ्च चन्द्रबिम्बपरिधेः केवलस्त्र्यंशः शुक्लं भवति (चन्द्रशृ० पृ० ३४३) । तस्मात् शुक्लस्य चन्द्रबिम्बस्य च परिमाणं न समानम्, तेन दृश्यमानं शुक्लं न वास्तवं चन्द्रबिम्बम् । तत एव शुक्लरूपश्चन्द्रस्तिथीनां दृक्प्रत्यये नोपयुज्यते । किन्तु मूलभूत चन्द्रगोलार्धमेव । तच्च नास्माकं प्रत्यक्ष-दृश्यम् । किञ्च—गणितशास्त्रेण सिद्धं कल्पितमेव तत्रोपयुक्तम् । तादृशगणित-सिद्धो दृक्प्रत्ययस्तु अत्रापि विद्यत एव ।

नवीनतिथीनामपि दृक्प्रत्ययो न वास्तविकः । अत एव प्रतितिथ्यन्ते द्वादशान्तरमानेन रविचन्द्रयोरन्तरं नास्मद्दृष्टिगोचरयोग्यं भवति, तिथिषु सूर्यग्रहणप्रसङ्ग इव भूपृष्ठस्थानां दृक्प्रत्ययार्थलम्बनसंस्काराकरणात् । तथा च यदि नवीनतिथिनां लम्बनसंस्काररहितत्वेन आकाशे दृष्टिविषयत्वाभावेऽपि दृक्तुल्यता स्वीयपरम्पराप्रामाण्याद् अङ्गीक्रियते, तदा धर्मशास्त्रीयपारम्पर्यरक्षणाय कलारूपां तिथिं सम्पादयितुं गणितशास्त्रसिद्धान्तानुसारेण केऽप्यनियताः संस्काराः प्राचीनैराचार्यैरङ्गीकृतास्तदापि तासां दृक्तुल्यता कथं भज्येत ? अत एव

गणशदैवज्ञाभिमत-गणितसाधितास्तिथयो बाणवृद्धिरसक्षयानुसारिण्योऽपि दृक्-समा अभ्युपेताः ।" . . . सैषा यतो दृक्समा ग्राह्या मङ्गलधर्मनिर्णयविधौ . . . ' इति रीत्या तेन तासां दृक्तुल्यत्वं कर्माङ्गितया ग्राह्यत्वञ्च कथयति । तन्मतरीत्या बहुना कालेन ग्रहादौ यो भेदो वेधादिना दृश्यते, तत्परिहाराय क्रियमाणाः संस्काराः कालभेदकृताः अचलाः प्रत्यहमाकर्षणादिवशादुत्पद्यमानाः प्रत्यहञ्च विभिन्नपरिमाणाश्चलाः । 'चलः प्रत्यहमन्याद्दक्' इति वासनाभाष्यात् । बीज-संस्कारनिषेधकवाक्यानां तन्मतरीत्या केवले चन्द्रे तत्रापि प्रत्यहं तिथ्याद्यानयने चलबीजसंस्कारनिषेध एव तात्पर्यम् । तथा चास्मिन् पक्षे यद्यपि दृक्समत्वा-पादकबीजादिसंस्कारा अभ्युपगताः; तथापि धर्मशास्त्रोपयोगी बाणवृद्धिरसक्षय-सिद्धान्तः कल्पितस्थिर-पौर्णमासीचन्द्रबिम्बाश्रयणेन समर्थ्यत एव ।

ईश्वरदत्तशास्त्रिणः, अन्ये च दृग्गणितवादिन एवमाहुः—'लगध-ब्रह्म-वशिष्ठ-कश्यप-सूर्यादिप्रोक्ताः सर्वेऽपि ग्रहास्तस्मिन् काले दृक्तुल्या एवासन् । दृष्टिभेदादेव कालभेदेन सर्वे सान्तरा जाताः । सूर्योक्ता खेटा यदा दृक्तुल्या आसन्, तदा तेषां ग्रहणं युक्तमासीत् । इदानीं तेऽपि सान्तरा जाताः । तेन श्रौतस्मार्तकर्मानुष्ठानेषु तेऽपि त्याज्याः । स्थूला तिथिर्ग्राह्येति मतं तु भ्रान्ति मूलकम् । कलात्मिका अन्तरात्मिकेति तिथिद्वैविध्यमपि नास्ति । चन्द्रकलामाना-सूर्यचन्द्रान्तरोद्भवा, तिथिरेकविधैव । सा च सूक्ष्मात्सूक्ष्मतरैव ग्राह्या ।

'सूक्ष्मात्सूक्ष्मतराग्राह्या प्रत्यक्षा श्रुतिसम्मता ।'

इति दृश्यगणितमीमांसायाम् ।

एतन्मतरीत्या भूकेन्द्रस्था धर्मकार्येषु ग्राह्याः, भूपृष्ठगा अग्राह्याः, वेधकार्यं तस्याः परीक्षणार्थत्वात् । एतद्रीत्या येन शास्त्रेण खेटा [illegible] भवेयुः, स सिद्धान्त एवार्षः । यथा—

'येन शास्त्रेण दृश्यास्ते भवन्ति दिवि खेचराः ।
स सिद्धान्तः सदैवार्षः स्वीकृतः पूर्वसूरिभिः ।' इति

'संसाध्यः स्पष्टतरं बीजं नलिकादियन्त्रेभ्यः ।
तत्संस्कृतग्रहास्तु सर्वे साम्यं भजन्त्येव ॥' —इति ग्रन्थान्तरे ।

'ध्यानग्रहोपदेशाद्बीजं ज्ञात्वा च दैवज्ञैः ।
तत्संस्कृतग्रहेभ्यः कर्तव्यौ निर्णयादेशौ ॥' इति ब्रह्मसिद्धान्ते ।

'किं तेनापि सुवर्णेन कर्णपातं करोति यत् ।
तथा किं तेन शास्त्रेण यन्न प्रत्यक्षतः स्फुटम् ॥' शाकल्यसंहितायाम् ।
'दृक्करणैक्यविहीनाः खेटा स्थूला न कर्मणामर्हाः ।
अत इह तदर्हतायै तात्कालिकबीजविस्तरं वक्ष्ये ॥' इति ग्रन्थान्तरे ।
'कर्मार्हपञ्चाङ्गसमत्वसिद्धौ निशापतेरेव महोपयोगात् ।
दृक्सिद्धयेऽस्य त्रिविधं तु बीजं तुङ्गान्तराख्याद्यमकल्पि सूक्ष्मम् ॥' ग्रन्थान्तरे
'उक्ताभावो विकृतिः प्रत्यक्षपरीक्षणैर्व्यक्तिः' इति ग्रहलाघवे

सूर्य-पराशरप्रणीतभगणयोर्महदन्तरे जाते किं कर्तव्यमिति शङ्कायां नृसिंह-सौरभाष्ये उक्तम् —'यस्मिन् काले यो ग्रहो येन पक्षेण दृक्तुल्यतां प्राप्नोति तदानीं स एव पक्षः श्रेयान् ।' 'अतएवं गणितस्कन्धे उपपत्तिमानेव आगमः प्रमाणम्' ( सि० शि० स्व० टी० ) इति ।

एवमेव बहूनि तत्र तत्र ज्यौतिषग्रन्थवाक्यानि सन्ति—

'यदा तौ मिलितौ स्याताममावास्या तदा भवेत् ।
यदा द्वादशभागानामन्तरं स्यात्तयोर्द्वयोः ।
प्रतिपन्नाम सा ज्ञेया तदन्ते विधुदर्शनम् ॥
भागद्वादशकेनैव प्रत्यहं हि तिथिर्भवेत् ।
सूर्येण पुरा वेदचक्षुर्ज्योतिःशास्त्रं मयाद्भुतम् ॥
ततः पूर्वैश्च मुनयः स्वं स्वं सिद्धान्तमूचिरे ।
यस्मिन् देशे यदा काले यद्यत्सिद्धान्तमार्गतः ॥
उदयास्तं ग्रहाणां स्याद् ग्रहणं चन्द्रसूर्ययोः ।
विधोर्विलोकनं वापि भवेत्प्रत्यक्षमाश्रितः ॥
इष्टकाले स्फुटौ कृत्वा चन्द्रसूर्यौ प्रधानतः ।
तिथिमासादि कुर्वीत नान्यथा तु कथञ्चन ॥'

एवम्—बाणवृद्धिरसक्षयसिद्धान्तो भट्टोत्पलादिभिः कैश्चिदेवाङ्गीकृतः, न चार्षः सः । अत एव ज्यौतिषसिद्धान्तग्रन्थेषु स्मृतिषु च नायमुट्टङ्कितः, किन्तु केषाञ्चिन्निबन्धकाराणां कल्पनाप्रसूत एव । तदानीं प्रचलितसर्वा-

पेक्षया सूक्ष्मतरगौरादिसिद्धान्तानुसारेणायं सिद्धान्तः परिकल्पितः । शुद्धदृक्तुल्यसूक्ष्मतिथिषु स्वयं सिद्धान्तः सर्वथाऽसङ्गत एव । ऋषिभिस्तु—

'यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम् ।
दृश्यते तेन पक्षेण कुर्यात्तिथ्यादिनिर्णयम् ॥'

एवमादिवराह-चातुर्मास-कल्पवचनैर्दृग्गणितसाधिता एव तिथयो ग्राह्याः । तत्र तु सप्तवृद्धिदशक्षयसिद्धान्त एव पुष्यते ।'

श्रीमद्विद्यारण्यप्रभृतयः प्राचीनाचार्यास्तु व्यासादिमहर्षिवचनानुरोधेन ग्रहणग्रहयुत्यादिषु दृग्गणितं व्रतोपवासादिधार्मिककार्येषु निर्बीजसूर्यसिद्धान्तोक्तगणितानुसारेण बाणवृद्धिरसक्षयसिद्धान्तमेवाभ्युपगच्छन्ति । स एव च सिद्धान्तो निबन्धग्रन्थेषु सनातनधर्मानुयायिसमाजेषु च समाद्रियते । तथा च षट्शतीपूर्वमारचितायां विद्यारण्यकृतायां दृग्गणितप्रभायाम्—

'सूर्यसिद्धान्तशास्त्रेण समानीता ग्रहाः सदा ।
नित्ये कर्मण्युपादेया न तु दृग्गणितागताः ॥
नैमित्तिके कर्मणि तु ग्राह्या दृग्गणितागताः ।
काम्ये तूभयथा ग्राह्यास्तदप्यत्रोपपाद्यते ॥
तिथ्यादिषु तु कर्तव्ये काम्ये कर्मणि नित्यवत् ।
ग्राह्यास्तु नैमित्तिकवत् कर्तव्ये ग्रहणादिषु ॥
यथा कालस्य सर्वस्य निर्णयं वदतोदितम् ।
परेद्युरपराह्णे तु पार्वणश्राद्धनिर्णये ॥
अपराह्णव्याप्त्यभावे सायाह्नव्याप्तिरिष्यते ।
उभयोरप्यभावे तु श्राद्धं त्याज्यं किमास्तिकैः ॥
एकोनविंशतिपलरहिता दशनाडिकाः ।
भवेद् दृग्गणितानीततिथिनां परमः क्षयः ॥
तथा सति हरिद्वारे तत्प्रान्ते च तदुत्तरे ।
कुरुक्षेत्रादिषु तथा नक्षत्रायनदिने क्वचित् ॥
पूर्वे दिने परदिने परमक्षयसंयुते ।
कालद्वयव्याप्त्यभावात् श्राद्धं त्याज्यं किमास्तिकैः ॥

सार्धबाणसपादाङ्गघटीवृद्धिक्षयान्विताः ।
गृहीता धर्मशास्त्रैर्हि तिथयो नित्यकर्मसु ॥
स्मृतीनाञ्च पुराणानामीदृक् तिथिवशात्सदा ।
निर्णयो युज्यते नो चेत्स्मृत्यादीनामसङ्गतिः ॥
परःसहस्रकार्येषु धर्मशास्त्रोदितेषु हि ।
तिथ्याद्यन्तघटीमानवशान्निर्णय इष्यते ॥
तन्निर्णयस्यैव सदा स्यादसङ्गतिरन्यथा ।
तस्मायुक्तं मया प्रोक्तं गृहीतव्यं सदास्तिकैः ॥'

इति आर्षवचनानुरोधितयैव श्रीकालिदास-विद्यारण्यादिवचनानामपि विषयविशेषे दृग्गणितव्यवस्थापकत्वं युक्तम् , तेषां ज्यौतिषसिद्धान्तानभिज्ञत्वोक्तिस्तु बाल-चापलप्रयुक्तैव ।

यत्तु केनचिदुक्तम्—'वेदाङ्गज्योतिषस्यार्षत्वेऽपि प्राचीनत्वेऽपि च यथेदानीं नादरस्तथैव सूर्यसिद्धान्तस्यापि प्रत्यक्षविरुद्धत्वान्नादरो युक्तः' इति । तदपि तुच्छम्; 'सौरोपनिषदेवाद्ये'त्यादिभिः आर्षवचनैः प्रत्यक्षमनादृत्यापि सूर्यसिद्धान्तस्य ग्राह्यत्वबोधनात् । तद्बलादेव वेदाङ्गज्यौतिषापेक्षयाऽपि सूर्यसिद्धान्तस्यैव ग्राह्यत्वोपपत्तेः । तेन सूर्यसिद्धान्तानुसारेणैव शृङ्गोन्नतिग्रहयुत्यादौ दृक्समत्वा-पादकसंस्कारानुसारेण, श्रौतस्मार्तकर्मव्रतोपवासाद्यर्थं तादृक्संस्काररहितगणिता-गतरीत्यैव तिथ्यादिनिर्णयः कर्तव्यः ।

'इन्दोस्तिथ्यक्षलाटादेरन्यत्रेष्टा चलक्रिया' इति करणोत्तमे द्वितीयाध्याये 'इन्दोस्तिथ्यर्क्षलाटादिभ्योऽन्यत्र ग्रहणग्रहयोगकाललग्नादौ चन्द्रस्य शीघ्रकर्मा' इत्येतद्व्याख्यानेऽच्युतः—

'ग्राह्योऽयमेव भूस्थानां द्रष्टॄणां चन्द्रमाः सदा ।
तिथिनक्षत्रयोगादौ लाटे चान्यो भगोलगः ॥' इति ।

शङ्करभारतीन्द्रकृते खचरदर्पणे द्वितीयपञ्चमाध्याययोः—

'मान्दैककर्मसंस्कृतचन्द्रार्कौ तिथिभयोगकरणानाम् ।
योग्यौ स्यातां ग्रहणे चन्द्रोऽन्यैः संस्कृतो ग्राह्यः ॥' इति ।

गणकानन्दे च स्पष्टमुक्तम्—

'कर्तव्याः पञ्च संस्कारा मध्ये खेटेषु सर्वदा ।
पूर्वध्रुवः प्रथमतस्त्रिगुणाब्दस्ततः परम् ॥
देशान्तरं बीजफलं बाहोः फलमिति क्रमात् ।
सूर्यंज्ञयोर्बीजफलम नूक्त शास्त्रकर्तृभिः ॥
चन्द्रोच्चस्य तथा राहोश्चन्द्रार्कग्रहणादिषु ।
आवश्यकत्वात्कर्तव्यं न तिथ्यानयनादिषु ॥' इति ।
श्रीविद्यारण्यस्वामिकृतायां दृग्गणितप्रभायां स्पष्टमुक्तम्–
'सूर्यसिद्धान्तशास्त्रेण समानीता ग्रहाः सदा ।
नित्ये कर्मण्युपादेया न तु दृग्गणितागताः ॥
नैमित्तिके कर्मणि तु ग्राह्या दृग्गणितागताः ।
काम्ये तूभयतो ग्राह्यास्तदप्यत्रोपपाद्यते ॥
तिथ्यादिषु तु कर्तव्ये काम्ये कर्मणि नित्यवत् ।
ग्राह्यास्तु नैमित्तिकवत् कर्तव्ये ग्रहणादिषु ॥
आनन्दगिरिकृते स्मृतिसमुच्चये विदूरथवचनम्–
'सूर्यसिद्धान्तपञ्चाङ्गं विलोक्यैव प्रवर्तयेत् ।
प्रमाणं तदिति ज्ञेयमन्यथा व्याकुलं भवेत् ॥' इति ।

भगवान् व्यासोऽपि—

'सौरोपनिषदेवाद्या कल्पे त्वस्मिन् सनातनी ।
यामादित्यः स्वयं प्राह मयाय परिपृच्छते ॥
कालज्ञानं तु तत्सिद्धं विशुद्धं नान्यदुच्यते ।
तद्विरुद्धं तु यत्सर्वमपरिग्राह्यमेव तत् ॥'

भार्गवोऽपि–

'सूर्यांशपुरुषेणोक्तं तन्त्रं तिथ्यादिसम्मतम् ।
ग्रहणादौ तु वक्ष्यामि सविशेषमथो शृणु ॥' इति ।

'शृङ्गोन्नतौ ग्रहयुतौ ग्रहणे तथाऽस्ते छायानिरीक्षणविधावुदये च देयम् ।
बीजं फलं तिथिभयोगविधौ त्वदेयं चन्द्रे प्रदेयमखिलं क्षितिजादिकेषु ॥'

—इति लल्लः ।

तत्त्वविवेके च कमलाकरः–

'वेलाहीनेऽन्तरं यत्तद्बीजं मत्वैव कालजम् ।
कर्मार्हं त्वचरं शुद्धं नाशयन्त्यधमा बलात्
रविणाऽल्पान्तरात्त्यक्तं तद्बीजं विधिनाहृतम् ।
यन्त्रैश्च बहुभिस्तज्ज्ञैः स्फुटखेटोदितौ चयौ ॥
दृष्टयर्थनिर्णयादेशौ अदृष्टार्थं न तौ ह्यतः ।
अदृष्टफलसिद्ध्यर्थं यथार्कादिगणितं कुरु ॥
गणितं यद्धि दृष्टार्थं तद्दृष्ट्युद्भवतः सदा ॥
अदृष्टफलसिद्ध्यर्थं निर्बीजार्कोक्तमेव हि ।
प्रमाणं श्रुतिवद् ग्राह्यं कर्मानुष्ठानतत्परैः ॥

ज्योतिर्निबन्धे च--

'श्रौतानि स्मार्तकर्माणि पुराणोक्तानि यानि च ।
ज्योतिषोक्तेः स्फुटे काले कुर्युस्तत्फलकाङ्क्षिणः ॥
विवाहे जातके प्रश्ने यात्रावास्तुव्रतादिषु ।
ज्योतिःशास्त्रफलं सर्वं प्रस्फुटद्युचराश्रयम् ॥'

'वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं यो ज्यौतिषं वेद स वेद यज्ञान् ॥'

'यस्य कर्मणो यः कालो धर्मशास्त्रेणोच्यते

यथा उदगयन आपूर्यमाणपक्षे नक्षत्रे । ( आश्व० गृह्य० १।४।१ )

अन्यच्च--ज्यौतिषशास्त्रस्य वेदाङ्गत्वात्, वेदस्य च प्रत्यक्षानुमानानधिगत-धर्मब्रह्मपरत्वेन ज्यौतिषशास्त्रनिरूपितकालस्यापि यज्ञाङ्गत्वं स्पष्टमेव । धर्मस्य शास्त्रैकसमधिगम्यत्वेन कालस्य तदङ्गतायाश्चापि शास्त्रैकगम्यत्वमेव । दर्शपौर्णमासादिक्रियाणामभिनिर्वर्तकरूपयागस्य प्रत्यक्षत्वेऽपि यथा स्वर्गादिफलतददृष्टजनकत्वादिकं शास्त्रगम्यमेव, तथैव ज्योतिषशास्त्रे कतिचिदंशानां प्रत्यक्षत्वेऽपि यागाङ्गतिथ्यादीनां शास्त्रैकगम्यत्वमेव मन्तव्यम् । चन्द्रसूर्योपरागग्रहयुत्यादिविषयप्रत्यक्षताभिप्रायेणैव 'प्रत्यक्षं ज्यौतिषं शास्त्रम्' इत्याद्युक्तिः । अन्यथा 'ज्योतिषामयनं साक्षाद्यत्तज्ज्ञानमतीन्द्रियम्' इति भागवतपद्योक्तज्योतिषज्ञानस्य अतीन्द्रियत्वोक्तिरपार्थैव स्यात् । यन्त्रैर्नानाविधैः साधनैश्चापि ज्योतिषां स्वरूपं तद्गत्यादयश्च न साक्षात्कर्तुं शक्यन्ते ।

'नैव शक्यः प्रसंख्यातुं याथातथ्येन केनचित् ।
गतागतं मनुष्येण ज्योतिषां मांसचक्षुषा ॥'
मत्स्यपुराणे ( १३६ अध्याये )

'एकरूपप्रधानस्य परिणामोऽयमद्भुतः ।
नैव शक्यः परिज्ञातुं यथातथ्येन केनचित् ॥
गतागतं मनुष्येण ज्योतिषां मांसचक्षुषा ।
आगमादनुमानाच्च प्रत्यक्षादुपपत्तितः ॥
परीक्ष्य निपुणं बुद्ध्या श्रद्धातव्यं विपश्चिता ।
चक्षुः शास्त्रं जलं लेख्यं गणितं मुनिसत्तमाः ॥
पञ्चैते हेतवो ज्ञेयाः ज्योतिर्मानविनिर्णये ॥
वेलाहीने पर्वणि गर्भविपत्तिश्च शास्त्रकोपश्च ।
अतिवेले कुसुमफलक्षयं भयं सस्यनाशश्च ॥'

इति ग्रहगणितागतस्पर्शादिकालात् प्राक् पश्चाच्च स्पर्शादिदर्शने औत्पत्तिके प्रकृते-रन्यत्वलक्षणा उत्पाता यत्र देशे मनुष्यापचारपापसञ्चयस्तत्रैव भवन्ति ।

''अपचारेण नराणामुपसर्गः पापसञ्चयाद्भवति ।
संसूचयन्ति दिव्यान्तरिक्षभौमादिकमुत्पाताः ॥
मनुजानामपरक्ता देवताः संसृजन्त्येतान् ।
तत्प्रतिघातार्थ नृपः शान्तिं राष्ट्रे प्रयुञ्जीत ॥'

इति वराहेण उत्पातनिमित्तमुक्तम्'' इति नृसिंहवासनाभाष्ये । 'रुद्रपार्षदरूपा अन्तरिक्षचरा देवता लोकापचारेणापरक्ता आदर्शसदृशानि शरीराणि धृत्वा यथास्थं ग्रहं लोकाभावाय अन्यत्र दर्शयन्ति, कदाचित् सनक्षत्रमपि'इत्येवं शाखा-स्कन्धे स्पष्टमुक्तम्' इति दादाभाईकृते सूर्यसिद्धान्तव्याख्याने ।

महाभारतेऽपि—'कलौ ग्रहोऽपर्वणि स्यात्' इति प्रमाणैर्ग्रहाणामन्यथा-दर्शनं पूर्वापरकालव्यत्यासेनापि मनुष्यापचारेण पापसञ्चयाद्भवति । तेन पाप-दोषेण दृष्टिदानाय समग्रहविधानेऽनाश्वासात् सूर्यसिद्धान्तगणितागतसूर्यचन्द्राभ्यां तिथ्यादिपञ्चाङ्गानुसारेणैव श्रौतस्मार्तादृष्टफलकं कर्मानुष्ठानं युक्तम् ।

यदुक्तम्—'रविचन्द्रयोरुपरागकारणमदृश्यो भुजगाकारो राहुरिष्यते, मोक्षस्यापि कारणं विष्णोश्चक्रमिति, तदप्यदृष्टमेव । ततश्च स्पर्शमोक्षयोरपि कथं न दृग्गणित-

मुपेक्ष्य आगमैकशरणैर्भूयते ? एवमेव शृङ्गोन्नत्यादौ तत्कुतो दृग्गणितमेव गृह्यते' इति । तन्न; तत्र 'सूतकं राहुदर्शने'; 'दृष्ट्वा स्नायात्' 'इति वचनेन' दर्शनस्यैव स्नानादिहेतुत्वोक्त्या दृग्गणितस्यापेक्षणात् । एवं चन्द्रदर्शनादिकमेव यत्र धर्म-हेतुस्तत्रापि दृग्गणितमपेक्ष्यते ।

यत्तु—न च बाणवृद्धिरसक्षयानुरोधेनैव चन्द्रे बीजसंस्कारः कार्य इति वाच्यम्; गणिते दृक्तुल्यतापादनस्यैव बीजसंस्कारोद्देश्यत्वेन बाणवृद्धिरसक्षयानुरोधेन तत्करणे तत्पूर्त्यसम्भवेन गणितस्थौल्यानपायात्, तिथ्यादिषु दृग्गणितैक्यस्य ऋषिभिरनुमोदितत्वाच्च । अत एव बौधायनेन त्रयोदश-सप्तदश-दिवसीयपक्षयो-रन्वाधानं निषिद्धम् । भारते मुहूर्तग्रन्थेषु च तादृशपक्षौ शुभकर्मसु वर्जितौ । दृक्समगणितेनैव तौ युज्येते, न स्थूलगणितेन । 'त्रयोदश-सप्तदशदिवसयोः प्रसक्तिरेव नास्तीति कालमाधवोक्तिरसङ्गतैव । एवं बृहत्तिथिचिन्तामणौ—

"सौरोऽर्कोऽपि विधूच्चमङ्ककलिको नाब्जस्तमस्त्वार्यज-
स्तेभ्यः स्याद् ग्रहणादि दृक्सममियं प्रोक्ता मया सा तिथिः ।
ग्राह्या मङ्गलधर्मनिर्णयविधौ एषा यतो दृक्समा-
ऽप्यपेक्षा यदि चालितोपकरणे तल्लक्षणास्यात्तिथिः ॥'

इति दृक्सिद्धतिथिरेव सर्वत्र ग्राह्यतोक्ते"ति । तन्न; दर्शितव्यासादिवचनविरोधात् । तथा हि— 'यन्त्रवेधादिना ज्ञातं यद्बीजं गणकैस्ततः ।
ग्रहणादि परीक्षेत न तिथ्यादि कदाचन ॥
'अदृष्टफलसिद्ध्यर्थं निर्बीजार्कोक्तमेव हि ।
प्रमाणं श्रुतिवद् ग्राह्यं कर्मानुष्ठानतत्परैः ॥'

इति सिद्धान्ततत्त्वविवेके कमलाकरः । शाकल्यसंहितायामपि—

'तिथ्यादिसाधने क्वापि नार्केन्द्वोर्बीजयोगिता ।
राहुदर्शनतोऽन्यत्र दृक्सिद्धा नेष्यते तिथिः ॥' इति ।

कालनिर्णयेऽपि—

'प्रत्यहं तिथिनक्षत्रयोगस्यानयने विधुः ।
अबीजसंस्कृतो ग्राह्यो ग्रहणादौ तु बीजयुक् ॥'

एतद्वचनानुरोधेनैव कालमाधवोक्तिरपि समञ्जसा । धर्मशास्त्रोपयुक्ततिथ्यादि-निर्णायक-सिद्धान्तानुसारेण त्रयोदश- सप्तदशदिवसपक्षयोरप्रसक्त्युक्तिर्युक्तैव ।

ननु ज्येष्ठत्वादुपजीव्यत्वात् सर्वप्रमाणापेक्षया प्रत्यक्षस्यैव प्राबल्यम् । अत एव प्रत्यक्षविरोधात् वह्न्यनुष्णत्वानुमानस्य कालात्ययापदिष्टता । एवं प्रत्यक्ष-विरोधादेव 'आदित्यो यूपः' इत्यस्याः श्रुतेर्गौणार्थकता सर्वैरभ्युपेयते । तथा 'कृष्णलान् श्रपयेत्' इत्यत्र श्रपणस्य उष्णीकरणे लक्षणाऽऽश्रीयते । तस्मात् प्रत्यक्षविरुद्धत्वाद् आर्षवचनान्येव प्रत्यक्षानुसारितया कथञ्चिन्नेयानि, इति चेन्न । रविचन्द्रयोः प्रादेशिकत्वादिप्रत्यक्षस्य अनुमानागमैर्बाधदर्शनेन परीक्षिता-नुमानागमादीनां प्रत्यक्षबाधकत्वात् । वह्न्यनुष्णत्वानुमानं तु अपरीक्षितमेव । 'आदित्यो यूपः' इति श्रुतिस्तु अर्थवादरूपत्वादतत्परत्वेन दुर्बला । 'कृष्णलान् श्रपयेदि'त्यस्यापि उष्णीकरणमेव तात्पर्यविषयम् । तत्परागां तत्त्वमस्यादि-वाक्यानां तु प्रत्यक्षसिद्धदेहात्मत्वबाधकत्वमेव दृश्यते । तदुक्तम्—

'तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव ।'

'श्रुतिर्यत्र प्रमाणं स्याद्युक्तिः का तत्र नारद ।

जिज्ञासोर्युक्तिरिष्टाऽस्ति यदि श्रुत्यनुसारिणी ॥' (सूत ११०)

न च ज्येष्ठत्वं बाधकत्वे तन्त्रम्; ज्येष्ठस्यापि रजतज्ञानस्य कनिष्ठेन 'नेदं रजतमि'ति ज्ञानेन बाधदर्शनात् । नापि उपजीव्यविरोधेन सर्वत्र अनुमानादीनां दौर्बल्यम्, उपजीव्यभूतस्य प्रत्यक्षविशेषस्य प्राबल्येऽपि तदनुपजीव्य-प्रत्यक्षस्य [illegible] बाधाभावात् । अत एव वेदान्ते प्रत्यक्षस्यागमोपजीव्यत्वेऽपि देहात्मत्व-[illegible] आगमबाध्यत्वाभ्युपगमः । एवमेव अनुमानस्यापि तत्रागमविरोधे प्रत्यक्षस्य आगमबाध्यत्वाभ्युपगमः । एवमेव अनुमानस्यापि तत्रागमविरोधे दौर्बल्यम् । 'तत एव नरशिरःकपालं शुचिः प्राण्यङ्गत्वात्, शङ्खशुक्तिकादिवदि'ति [illegible] । 'नारं स्पृष्ट्वास्थि सस्नेहं सचैलो जलमाविशेदि'ति आगमविरोधेन आभास-[illegible] मानयोगक्षेमत्वमेव अनुमानस्य ।

[illegible]सिद्ध्यर्थं ब्रह्मगुप्तमतेन दृक्कर्मोक्तम्, नृसिंहदैवज्ञेन सूर्यसिद्धान्तवासना-[illegible] 'शृङ्गोन्नति-ग्रहयुति-ग्रहणोदयास्त-छायादिषु दृग्गणितैक्यान्यथानुपपत्त्या [illegible] तदन्तरं देयमेवे'त्युक्तत्वेन ग्रहणादिविशेषविषय एव मुनिकृतग्रन्थजनितग्रहेषु बीजसंस्कारो देयः, न तु तिथ्यानयनादिषु इति सिद्धमेव ।

ब्रह्मसिद्धान्ते चतुर्थाध्याये—

'द्वितीयं पापदृष्टीनां दृक्कर्म मुनिसत्तम ।

द्वितीयमेव दृक्कर्म नेच्छन्त्युत्तमदृष्टयः ॥

'शास्त्रीयव्यवहारे तु लौकिकं निष्प्रयोजनम् ।
केचिदन्येऽपि नेच्छन्ति तदप्रत्यक्षकारणात् ॥'

इति मध्यस्फुटग्रहैरेव तिथ्यादिकरणोक्तेस्तिथ्यादिषु दृक्कर्म नापेक्षितम् ।

एतेन 'ज्योतिर्निबन्धैरार्षवाक्यैश्च श्रौतस्मार्तादिष्टकर्मविषये केवलमन्दफल-संस्कृत-रविचन्द्राभ्यामेव बाणवृद्धिरसक्षयरूपतिथ्यानयनं कार्यम्, ग्रहणादिविषये बीजकर्मसंस्कृताभ्यां दृक्समाभ्यां रविचन्द्राभ्यां सप्तवसुवृद्धिदशक्षयरूपतिथ्या-नयनं कार्यम्, भौमादयस्तु बीजसंस्कृता एव ग्राह्याः 'यस्मिन् पक्षे यत्र काले' इत्यादिवाक्यान्यपि ग्रहणादिविशेषपर्यवसायीन्येव । ब्रह्मगुप्तवाक्ये तु 'ग्रहणग्रहयोगादिषु' इति स्पष्टमेव ग्रहणादिविषयविशेष एव दृग्गणितेतरपक्ष-निषेध उक्तः ।

कैश्चित्तु—कमलाकरस्य सूर्यसिद्धान्तपक्षपातित्वेन 'अदृष्टफलसिद्ध्यर्थं यथा-र्काद् गणितं कुरु' 'इत्यादिस्तदुक्तिर्मन्यते । तन्न ; विष्णुधर्मोत्तरे—

'यन्त्रवेधादिना ज्ञातं यद्बीजं गणकैस्ततः ।
ग्रहणादि परीक्षेत न तिथ्यादि कदाचन ॥'

इति व्यासवचनानुरोधित्वात्तस्याः । न च व्यासस्यापि पक्षपातित्वकल्पना युक्ता । अतः कमलाकरस्य निष्पक्षत्वादेव श्रौतस्मार्तकर्मभ्योऽन्यत्र दृक्तुल्यताभिप्रेतैव ।

''सुयुक्ता न मुन्युक्तिरप्यत्र शास्त्रे भवेत्कार्यवर्यस्य या दृग्विरुद्धा ।' इति ।

यदुक्तम्—अतीन्द्रियार्थनिर्णयस्थल एव आगमस्य प्रामाण्यम्, न तु प्रत्यक्षसिद्धौ । प्रत्यक्षस्थले प्रत्यक्षविरुद्धस्य आगमस्याप्रामाण्यात् । अत एव आगमवादिभिरपि ग्रहणादिसाधने प्रत्यक्षस्यैवाश्रयणमिति । तन्न; आगमबलादेव ग्रहणादौ दृग्गणित-स्वीकारात् अतत्परस्यागमस्य प्रत्यक्षाद् दौर्बल्येऽपि तत्परस्यागमस्य प्रत्यक्षानुमानापेक्षया प्राबल्यात् । तत एव प्रत्यक्षसिद्धस्य देहात्मवादस्य तत्प-रेणागमेन बाधः, प्रत्यक्षसिद्धस्य चन्द्रप्रादेशिकत्वस्य बृहत्परिमाणबोधकेन आगमेन बाधश्च ।

आधुनिकाः कथयन्ति—'पूर्वकाले दृग्गणितस्य ज्ञानं नासीदेव । तत एव पूर्वजैर्बाणवृद्धिरसक्षयरूपः सिद्धान्तोऽङ्गीकृतः ।' 'कदाचिदस्य प्राचीनतासिद्धये

ऋषिभिरेतदुक्तं समर्थितञ्चेत्यपि प्रोच्यते । एतत्समर्थनाय हीरुक्तम्—वेदाङ्ग-ज्योतिषसिद्धान्ते सौरवर्षमानेन षट्षष्ट्यधिकशतत्रयदिनानि भवन्ति । तदनन्तरजेन पितामहसिद्धान्तेन ३६५ दिनानि, २१ घट्यः, २८ पलानि । तदनन्तरं सूर्यसिद्धान्तेन ३६५ दिनानि, १५ घट्यः ३१ पलानि इति । तदपि न; दृश्यासन्नागमस्य प्रामाण्यादेव इदानीं सूर्यसिद्धान्तस्यादरः क्रियते । सर्वत्र दृक्तुल्यपदार्थग्रहणं कालेन महानन्तरः सम्पद्येत ।

यदुक्तम्—'स्थूलं कृतं भानयनमि'ति ऋषिभिर्निर्धारितस्य स्थूलगणितस्यैव स्थूलत्वमुक्तमिति । तन्न; ततः प्राक् दृक्साधकबीजसंस्कारस्य प्रतिपादितत्वेन आधुनिकाभिमतसूक्ष्मस्यैव पुलस्त्यादिवर्णितापेक्षया स्थूलत्वोक्तेः ।

सर्वत्र दृक्तुल्यपदार्थग्रहणे यथावत्समयज्ञानं न सम्भाव्यते । तथात्वे यद्येक-गुर्वक्षरोच्चारणकालतुल्यान्तरमेकस्मिन् सौरवर्षे सावनानां भवेत्तदा कल्पे विंशति-सहस्रदिनतुल्यमन्तरं पतति । न च ब्रह्मगुप्तादयो विकलाकोट्यंशं लक्षयितुं क्षमाः, शिरोमणिप्रकाशेनाप्यसमर्थनात् ।

यदुक्तम्—तदर्थमेव बीजसंस्कारः (शोधनं) क्रियते । अत एव भास्करेणो-क्तम्—'यदा पुनर्महता कालेन महदन्तरं भविष्यति, तदा महामतिमन्तो ब्रह्म-गुप्तादिसमानधर्माण एवोत्पत्स्यन्ते । ते तदुपलब्ध्यनुसारिणीं गतिमूररीकृत्य शास्त्राणि करिष्यन्ति इति । तन्न; पूर्वोक्तवाक्येन ब्रह्मगुप्तादीनामपि विकलादि-कोट्यंशज्ञानाक्षमत्वप्रतिपादनात् । तथा च यथाशास्त्रमेव 'शास्त्रं करिष्यन्ती'-त्यस्यार्थः ।

यदुक्तम्—दृश्यगणितं शास्त्रीयमेव, स्थूलगणितमेव अशास्त्रीयम्, इति । तन्न; अज्ञातज्ञापकस्य शास्त्रस्यैव शास्त्रत्वेन प्रत्यक्षानुमानगम्यस्य शास्त्रबोधितत्वेऽपि तत्रानुवादकत्वेन शास्त्रत्वाभावात् । न च तथाविधशास्त्रैकगम्यत्वं दृश्यगणितस्य वक्तुं शक्यम्; तथात्वे शास्त्रहीनैः पाश्चात्त्यैस्तस्य ज्ञातुमशक्यत्वापातात् । यथा न्यायशास्त्रीयानुमानखण्डस्य अनुमानमूलकत्वेन अनुमानात्मकत्वमेव नागमरूप-शास्त्रात्मकत्वं तथैव ज्योतिषशास्त्रस्य तत्तद्यन्त्रसंस्कारादिप्रतिपादकत्वेऽपि तस्या-न्यथापि प्रत्यक्षानुमानाभ्यां ज्ञातुं शक्यत्वान्न शास्त्रैकसमधिगम्यत्वम् । ग्रहणा-स्तोदयादौ तस्य लौकिकस्यापि ग्राह्यत्वविधानात् तदादरो न लोकभयात् । यथा

भोजनस्य लौकित्वेऽपि कालविशेषदेशविशेषादिकमाश्रित्य विधिनिषेधावपेक्ष्य धर्माधर्मरूपत्वमिति तद्वत् ।

यात्रोद्वाहफलानां स्पष्टखेटाश्रयत्वात् फलसाधकानां खेटानाञ्च एकैकं सिद्धान्तरीत्या स्पष्टत्वाभावात् तत्सिद्धान्ताभिमानं त्यक्त्वा दृग्गणितगता एव ग्रहा ग्राह्याः, न तत्तत्सिद्धान्तागता दृक्समा इति यात्रोद्वाहादिष्वेव दृक्समानां ग्रहाणां ग्राह्यतोक्ता । एवमेव दृक्सिद्धग्रहकालेन ग्रहणादिविनिर्णय इति ज्योतिर्निबन्धीय-विशेषवचनानुसारं 'ज्योतिःशास्त्रफलं पुराणगणकैरादेश इत्युच्यते' इति सिद्धान्त-शिरोमणिवचनं दृष्टफलादेशविषयकमेव । 'यान्ति संसाधिताः खेटाः' इत्यादि-वचनान्यपि दृष्टादृष्टद्वैविध्यप्रतिपादकानेकप्रमाणैः विशेषविषयपराण्येव मन्त-व्यानि । अन्यथा तद्विरोधेनाप्रामाण्यापत्तेः । सर्वकर्मसु दृक्समतो असंस्कृतरवि-चन्द्राभ्यामानीततिथेरेव उपयुक्तत्वे भिन्नभिन्नकर्मविषये भिन्न-भिन्नार्यसौरब्राह्म-पक्षैरानीततिथ्यादिविधानं व्यर्थञ्च स्यात् । नृसिंह-पारिजाते---

'पैत्र्यादिकार्याणि च ब्रह्मपक्षे सौरेण कुर्याद् व्रतयज्ञदीक्षाम् ।
आर्येण विष्णुव्रतधर्मकादि प्रोक्तं तथा व्यासवशिष्ठमुख्यैः ॥'

माधवीये च---'ब्राह्मेण पितृकार्याणि देवकार्याणि सौरतः ।
विष्णुव्रतानि चार्येण निश्चितानि मनीषिभिः ॥' इति ।

निर्णयसारेऽप्येवमेवोक्तम्---"तत्र द्वादश्यादिव्रतादीनि ह्यार्येण [illegible] कारयेत् इति विशेषः ।

तिथिनिर्णयेऽपि---'वृद्धौ प्रवृद्धसिद्धान्तमधिगम्य मुनीश्वराः ।
दैवज्ञैर्निर्णयः कार्यो दशम्यादिदिनत्रये ॥
आर्यभट्टेन गणनं दशम्यादिदिनत्रये ।
कार्यमन्यत्र सौर्येण निश्चितं ब्रह्मवित्तमैः ॥
व्रतानामेव सर्वेषां सौरेणैव विनिर्णयः ।
दशम्यादित्रयाणां तु आर्येणैव विनिर्णयः ॥
तिथीनां चैव सर्वासां सौरेणैव विनिर्णयः ।
दशम्यादित्रयाणां तु स्तम्भेनैव तु कारयेत् ॥' इति ।

ज्योतिर्निबन्धे— 'साम्ये सौरः क्षये ब्रह्मा तिथिवृद्धौ पराशरः ।
सर्वकर्मसु कः श्रेयान् विष्णुधर्मेषु योऽधिकः ॥
ह्रासत्वाच्च तिथेर्भुक्तेः शीघ्रत्वात्कालनिर्णयः ।
कपक्षेणान्यथार्येण साम्येऽर्केण विधीयते ॥' इति

केरलीयानां साम्प्रतमाचारश्च—तिथिनक्षत्रमुहूर्तादिषु वैदिकेषु विषयेषु आर्ष-ग्रन्थसिद्धा ग्रहाः, जातकर्मौढ्योपरागादिषु लौकिकेषु विषयेषु च दृक्सिद्धा ग्रहा गृह्यन्ते ।

सूर्यसिद्धान्तोक्ता बाणवृद्धिरसक्षयपरममानमिता तिथिरेका, सप्तवृद्धिदश-ह्रासमानमिता तिथिरन्या, इति भेदस्तु प्रसिद्ध एव । तत्र कलाप्राधान्येन अन्तर-प्राधान्येन च तिथीनां प्रकारद्वयं सुवचमेव । दृक्सिद्धमेवार्षं श्रौतस्मार्तादिषु चार्वाकस्यैव शोभते नास्तिकस्य, प्रत्यक्षानुमानानधिगतगन्तृत्वेनैव शास्त्रस्य प्रामाण्यात् । भूकेन्द्रीयदृश्यापि तिथिर्दृक्सिद्धिनिषेधेन निषिद्धैव । 'भूतलेऽत्र घटो नास्ती'ति घटमात्रनिषेधवद् दृक्सिद्धनिषेधेन सर्वविधदृग्गणितस्य धार्मिककार्येषु निषेधात् ।

न च तत्कालचरबीजकैरिति बाणवृद्धिरसक्षयपक्षेऽपि चरबीजकानां ग्राह्य-त्वमुक्तमेवेति वाच्यम् ; स्वातन्त्र्येण सर्वबीजनिषेधेऽपि धर्मशास्त्रानुकूल-बाणवृद्धिरसक्षीणतिथिपोषकचरबीजकादीनामभ्युपगतत्वात् ग्रहगतयो न द्रष्टुं शक्या मनुष्यैरिति मत्स्यपुराणे व्यासो वक्ति । रुद्रपार्षदैरपि मनुष्याप्रचारैः भ्रान्तिरुत्पाद्यते इत्यपि विविधशास्त्रवचनैर्बोध्यते । भारते च तत्समर्थितम् । तत एव ग्रहणाद्यर्थमेव यन्त्रवेधादयो बीजश्च ग्राह्याणि, न श्रौतस्मार्तधर्मानुष्ठानार्थमिति शिष्टैर्निबन्धकारैर्व्यवस्थापितम् ।

सनातनधर्मानुयायिनां सर्वं धर्मानुष्ठानं निबन्धाधारमेव । निबन्धाश्च श्रुति-स्मृतिपुराणतन्त्रागमादिमीमांसामूलकाः, सर्वधर्मानुष्ठानस्य तन्मूलकत्वात् । नहि दृग्गणितवादिनां चार्वाकप्रायाणां भारतीयानां पाश्चात्त्यानां वा सम्मत्या धर्म-व्रताद्यनुष्ठानं सम्भवति । अत एव धर्मकार्येषु भूकेन्द्रीयदृश्या ग्रहतिथ्यादयो ग्राह्या इत्यपि निर्मूलम् ।

एतेन तद्भिन्नं सर्वमनार्षमित्यपि निराधारमेव ।

किञ्च—भारतीयैरपि दृश्यगणितवादिभिः प्रायेण पाश्चात्यप्रणाल्यनुस्रियते। पाश्चात्यास्तु भारतीयज्यौतिषशास्त्रवनवेक्ष्यापि सूक्ष्मातिसूक्ष्मां ग्रहस्थितिं पश्यन्ति। किं तावतैव ते ऋषयः? तन्निर्मितमेव गृहीत्वा धर्मकार्यं कर्तव्यम्?

वस्तुतस्तु—शास्त्रीयेण तपसा योगजसामर्थ्यातिशयेन अतीन्द्रियार्थदर्शिन एव ऋषयो भवन्ति। मन्त्रदर्शिनस्ततोऽपि अधिकसूक्ष्मदर्शित्वाद् ऋषयो भवन्ति, 'ऋषिर्दर्शनात्', 'मन्त्रद्रष्टारो भवन्ती'ति निरुक्तादिवचनात्। यन्त्रादिनिर्माणनन-प्रयोगकुशला वैज्ञानिका उक्तलक्षणाभावात् सूक्ष्मज्ञा अपि ऋषयो न भवन्ति।

किञ्च—यदि भूपृष्ठीयदृक्प्रत्ययसाधकाः संस्कारा भूगर्भीयदृक्प्रत्ययपरीक्ष-णार्थमेव अङ्गीक्रियन्ते, तदा तदभावे भूकेन्द्रीयदृक्प्रत्ययस्य शुद्धता सन्दिग्धैव स्यात्। सन्दिग्धोऽशुद्धश्च स कथं गृह्येत? ततश्च यत्रोभयविधाः संस्कारा विहिताः ग्रहणादौ, तत्रैव ते ग्राह्याः। यदि क्वचिद् भूपृष्ठीयनिषेधस्तत्र भूकेन्द्रीयसंस्कारः कृतोऽपि अपरीक्षितत्वात् सन्दिग्धशुद्धिक एव स्यात्। तथा च तद्विधानमेव कुतः सिद्ध्येत्?

'नतिलम्बनयुक्ता चेद् भूगर्भीया तिथिर्यदि।
भूपृष्ठे दृक्समाना चेदशुद्धा कथिता बुधैः।
अतोऽशुद्धा तिथिस्त्याज्या धर्मकृत्येषु यत्नतः॥'
'एषा बीजसमा युक्ता भूपृष्ठे नेत्रगोचरा।
गणितस्य परीक्षार्थं धर्मकर्मणि सा स्फुटा॥'

इति दृग्गणितमीमांसागत-त्वदुक्तिविरोधात्।

किञ्च—बीजनिषेधेन भूकेन्द्रीयस्य दृक्संस्कारस्य निषेधः, भूपृष्ठीये बीजा-भावात् लम्बन-नत्यादयः संस्कारा भवन्ति, न बीजम्।

केचित्तु—'दृग्गणितनिषेधस्य नियुक्तिकबीजनिषेध एव तात्पर्यम्, नियुक्तिकत्वेन तत्र भ्रान्तिसद्भावसम्भवादि'त्याहुः। तदपि न सङ्गतम्; यन्त्रवेधादिना गणकैर्यद्बीजं ज्ञायते, तस्य सोपपत्तिकस्यापि विष्णुधर्मोत्तरे निषेधात्।

केचित्तु—'दृक्प्रत्ययप्रदानां सूक्ष्मसंस्काराणां ज्ञानाभावादेव स्थूलान् ग्रहा-नङ्गीकृत्य पूर्वजाः प्रवृत्ताः' इति। तदपरे न क्षमन्ते; तथा हि—धर्मशास्त्रे धार्मिककृत्योपयुक्ततिथ्यादिसम्बन्धे बीजसंस्कारादिनिषेधादेव तज्ज्ञानं तेषा-

मासीदिति कल्पयितुं सुशकम्, प्राप्तौ सत्यामेव निषेधात् । यथा मनुना महायन्त्र-प्रवर्तनस्य उपागतकेषु गणनादेव तज्ज्ञानं तस्यासीदिति कल्प्यते । तथैवात्रापि सम्भवात् ।

विष्णुधर्मोत्तरे— 'यन्त्रवेधादिना ज्ञातं यद्बीजं गणकैस्ततः ।
ग्रहणादि परीक्षेत न तिथ्यादि कदाचन ॥'

कालार्के च— 'मान्दैककर्मसंसिद्धव्यर्केन्दूत्पादिता तिथिः ।
श्राद्धादिषु परिग्राह्या ग्रहणादौ तु बीजयुक् ॥'

ज्योतिःसिद्धान्तसङ्ग्रहे—'प्रत्यहं तिथिनक्षत्रयोगस्यानयने विधुः ।
अबीजसंस्कृतो ग्राह्यो ग्रहणादौ तु बीजयुक् ॥'

सूर्यसिद्धान्ते— 'नक्षत्रग्रहयोगेषु तथास्तोदयसाधने ।
शृङ्गोन्नतौ तु चन्द्रस्य दृक्कर्मादाविदं स्मृतम् ॥'

लल्लः—

'शृङ्गोन्नतौ ग्रहयुतौ ग्रहणे तथास्ते छायां निरीक्षणविधावुदये च देयम् ।
बीजं फलं तिथिभयोगविधौ त्वदेयं चन्द्रे प्रदेयमखिलं क्षितिजादिकेषु ॥'

अत एव— 'इन्दूच्चोनार्ककोटिघ्ना गत्यंशा विभवा विधोः ।
गुणोऽप्यर्केन्दुदोः कोट्यो रूपपञ्चाशयोः क्रमात् ॥'
'···फले शशाङ्कतद्गत्योर्लिप्ताभौ स्वर्णयोर्वधे ।
ऋणे चन्द्रे धनं भुक्तौ स्वर्णसाम्यवधेऽन्यथा ॥

इति मुञ्जालकृत-'लघुमानस'वचनस्य व्याख्याने उक्तम्—'अयं संस्कारः तिथि-साधने न क्रियते, पूर्वैरुपेक्षितत्वात्' इति । एवमेव श्रीनिवासतीर्थीये धर्मशास्त्रे—

'रवीन्दुमन्दसंसिद्ध-तत्तत्तिथ्यादिभोगतः ।
स्यातां तत्कालबीजोत्थौ बाणवृद्धिरसक्षयौ ॥
अतः पैतृककर्मादौ तत्कालचरबीजकैः ।
बाणवृद्धा रसक्षीणा नान्या ग्राह्या तथिः क्वचित् ॥' इति ।

मत्स्यलिङ्गपुराणादिषु आर्षज्ञानमन्तरा वस्तुभूतग्रहस्थितीनां मानुषज्ञाना-विषयत्वांगीताम् । अत एव आगमानुसारिग्रहतिथ्यादयो ग्राह्यत्वेनोक्ताः, दृक्-तुल्यतापादकबीजानां निषेधश्च उक्तः । धर्मकृत्येषु ग्रहणादिकतिपय-परिगणित-

स्थलेषु तेषामादरश्च सङ्गच्छते । सूर्यसिद्धान्तोक्ता अपि ग्रहा यद्यपि दृग्गणितागतग्रहैः सान्तरा भासन्ते; तथापि शास्त्रप्रमाणकास्त एव ग्राह्याः, दृक्सिद्धेषु भ्रान्तिसम्भवात् । ग्रहणादिषु तत्तत्पुण्यानुष्ठाने दर्शनं निमित्तमुक्तमिति हेतोर्दृक्तुल्यतापादकसंस्कारास्तत्राभ्युपगताः ।

अपि च—यदा दृग्गणितवादिनामपि चित्रारेवत्यादिभेदेन अयनांशभेदो भवति, तदनुसारेणैव पञ्चाङ्गीयग्रहतिथ्यादिषु भेदो भवति, तदा तु स्थिरमेकं शास्त्रीयपक्षमाश्रित्यैव पञ्चाङ्गनिर्माणं युज्यते ।

यत्तु—सार्धबाणसपादाङ्गौ परमौ तिथीनां वृद्धिक्षयावाक्षिप्य 'अङ्कवृद्धिदशक्षीणा प्रत्यक्षौ वेदसम्मितौ' ( दृग्गणितमीमांसा १।२७ ) इत्युक्तम् । तत्तु साहसमात्रम् ; वेदवचनेन तत्साधयितुमशक्यत्वात् । किन्तद् वेदवचनं येन 'अङ्कवृद्धिदशक्षीणा' इत्युक्तमिति तु सर्वथाऽशक्यदर्शनम् । तिथ्यां [illegible]वचनमात्रेण तु तन्न सिद्ध्यति, तेनैवान्यैरपि स्वपक्षस्य सिषाधयिषितत्वात् ।

यदप्युक्तम्—धर्मशास्त्रभयात् शशिभास्करौ स्वतन्त्रौ दिवि चरन्तौ नानरोद्धुं शक्यौ । तत्तुच्छम्; यतस्तौ धर्मोत्पन्नौ धर्मनियन्त्रितौ धर्मसव्यपेक्षौ। परमेश्वरेण न केवलं तावेव, किन्तु सर्वमपि भचक्रं नियन्त्रितमेव । सर्वथा स्वातन्त्र्ये भगणस्य परस्पराघाताज्जगद्विप्लव एव स्यात् । अत एव आधुनिकैरपि तैस्तैर्नियमैर्नियन्त्रिता एव सर्वे ग्रहा अभ्युपेयन्ते । तत एव सूर्यचन्द्रादीनां गतिमार्गादिभेदाः सिद्ध्यन्ति ।

इयांस्तु विशेषः—आधुनिकैर्यन्त्रादिभिस्ते नियमा ज्ञायन्ते, महर्षिभिश्चापौरुषेयैर्वेदैस्तदुक्तयोगजसामर्थ्यातिशयेन तथा पुराणानुसारेणापि । लौकिकप्रत्यक्षे भ्रान्तिसम्भावनाऽस्ति । आगमजन्यज्ञाने तु भ्रान्तिसम्भावना नास्ति, आस्तिकानामागमस्य प्रमाणमूर्धन्यत्वात् । आगमैश्च पार्वणश्राद्धादिकालविधानं कृतम् , काले च सम्भावितान् भेदाननूद्य पार्वणादिव्यवस्था कृता । निबन्धेषु तत्सर्वं विव्रियते । सा च व्यवस्था बाणवृद्धिरसक्षयसिद्धान्त एवोपपद्यते, नाङ्कवृद्धिदशक्षयसिद्धान्ते । तेन ज्ञायते यदार्षज्ञानानुकूला

ताहश्येव सूर्यचन्द्रगतिः । दृक्प्रत्ययापादकान् संस्कारान् तिथिसिद्धान्तिथो-स्तत्परमवृद्धिक्षयादिकञ्च ज्ञात्वाऽपि तत्र भ्रान्त्यादिदोषमालोक्य तत्परित्यज्य धर्मानुष्ठानोपयोगितिथ्यादिस्वरूपमुपवर्णितमागमैस्तदनुसारिभिर्निबन्धैश्च ।

यदुक्तम्—'दृश्यान् निगमागमान् विहाय सूर्यसिद्धान्तसिद्धा ग्रहा ग्राह्या इति बाणवृद्धिरसक्षयवादिनो वदन्ति' इति । तत्तुच्छम्; निगमागमानुरोधेनैव सूर्यसिद्धान्तसिद्धग्रहाभ्युपगमात् । वेध एव निगमागमा इति तु त्वदीयमेव मतिवैभवम् । वेधाश्रयेण निगमागमत्याग एव तद्वादिभिः क्रियते । तस्मान्मृषैव 'निगमागमान् विविच्य व्यवस्था क्रियते' इति प्रतिज्ञानम् । 'ते धर्मशास्त्रोक्त-वेदविहितचन्द्रकालोद्भववेधोत्पन्नतिथिज्ञानविहीनाः' इति कथनन्तु प्रमाद-विलसितमेव, त्वदपेक्षया विद्यारण्यादीनां बहुज्ञत्वस्य सुप्रसिद्धत्वात् । एवमेव तल्लोपे धर्मशास्त्रोदितकृत्यलोपात् पापसञ्चयवचनमपि जाड्यमेव, विपरीतस्यैव युक्तत्वात् । सौरपलिकवेधसिद्धनलिकादियन्त्रैः प्रत्यक्षसिद्धा दृग्गणितागता ग्रहा ग्रहयुत्यादिषु सर्वैरप्यभ्युपेयन्ते । पार्वणश्राद्धादिषु तु धर्मशास्त्रानुरोधेनैव वेधादिसिद्धास्ते त्याज्याः । धर्मशास्त्रैः सूर्योक्तस्य ग्राह्यत्वं मनुजोक्तस्य त्याज्यत्वमुच्यते ।

यदुक्तम्—'प्रत्यक्षसिद्धो न च वेदबाधा न धर्मशास्त्रस्य विधौ विरोधः । ज्योतिर्विदाञ्चापि न भेदबुद्धिरि'त्यादि । तदपि तुच्छम्; धर्मशास्त्रविरोधस्य प्रदर्शितत्वात् । तदनुमिततन्मूलभूतवेदविरोधस्यापि सत्त्वात् । ज्योतिर्विदामपि विरोधस्य बहुलमुपलम्भात् । ज्योतिर्विद्भिराचार्यैरेव धर्मकार्येषु दृक्संस्कार-बीजादीनां निषेधात् । तैरेव विषयविशेषे तदभ्युपगमस्योक्तत्वाच्च । न च प्रत्यक्षे वेदविरोध एव नास्तीति वाच्यम्; प्रत्यक्षसिद्धे देहात्मवादे तत्त्वमस्यादि-वेदवाक्यविरोधस्य स्पष्टत्वात् । न खलु ज्यौतिषशास्त्रस्य सर्वथा प्रत्यक्षत्व-मित्यप्युक्तमेव ।

यदपि बीजसंस्कारादि दृग्गणितमाहात्म्यप्रतिपादनम् । तेनैव च व्रतोप-वासादिकर्तव्यतावर्णनमिति । तदपि न किञ्चित्; मुञ्जालस्य लघुमानसे तादृक्-दृक्प्रत्ययापादकसंस्कारवर्णनेऽपि व्याख्यायाम्—'अयं संस्कारः तिथिभयोगसाधने न क्रियते पूर्वैरुपेक्षितत्वात्' इत्युक्तेः ।

एवमेव—मध्यमग्रहः स्वकक्षायामुच्चासन्नकेन्द्रदृश्यो ग्रहः, मन्दस्पष्टग्रहः, स्फुटमन्दफलसंस्कृतरविमध्यग्रहः, रविकेन्द्रस्य दृश्यः स्पष्टग्रहः, शीघ्रफलसंस्कृतरविमध्यग्रहः रविकेन्द्रस्य दृश्यः स्पष्टग्रहः शीघ्रफलसंस्कृतमन्दस्पष्टः, भूकेन्द्रदृश्यः भूपृष्ठीयस्पष्टग्रहः, यन्त्रवेधादिना भूपृष्ठदृश्यः भूमध्यस्पष्टरविः, केवलस्फुटमन्दफलसंस्कृतभूपृष्ठीयस्पष्टः रविः, च रान्तरोदयान्तरदेशान्तरसंस्कृतभूकेन्द्रदृश्यः भूमध्यस्पष्टरविः । एवमेव चन्द्रेऽपि उदयान्तरजन्यो गतिसंस्कारकक्षाजन्यस्तिथिसंस्कारः, रविमन्दफलजन्यश्च्युतिसंस्कारः, विक्षेपजन्यः कक्षापरिपातसंस्कारः, उच्चवशाज्जन्यो मन्दफलसंस्कारः, नातिलम्बनसंस्कृतः भूपृष्ठीयस्पष्टश्चन्द्रः, भूमध्यस्पष्टतिथिः, भूपृष्ठीयस्पष्टतिथिः—इत्यादिदृग्गणितागतानां सूर्यचन्द्रादिग्रहाणां शास्त्रानिषिद्धे विषय एव ग्राह्यता ।

दृक्प्रत्ययापादकाः पञ्चसंस्कारास्तु खचरदर्पणे—

'दृक्सिद्धमध्यमरवेः कृत्वा स्फुटमत्र मन्दचन्द्रस्य ।
दृक्संस्कारैः कार्यं स्पष्टत्वं पञ्चभिस्तु तान् वक्ष्ये ॥
दृक्सिद्धभानुबाह्ये फलविकला साक्षिबाणभक्तफलम् ।
लिप्ताद्यं पूर्वकृताद् व्यत्ययतः कार्यमत्र पुष्पवतोः ॥
पातो न चन्द्रबाहुज्या कोटिज्या परस्परेण हता ।
पञ्च हृता फलधनमृणभोजे युग्मे पदे स्थिते केन्द्रे ॥
चन्द्रोच्चाच्छोधितरविकोटीज्याव्यर्कविधुभुजगुणेन निहता ।
कलीकृता सा तिथिहृता शशिमन्दहारल्लब्धा ॥
भागादिकमिन्दूच्चोनरवौ मकरादिराशिषट्कस्थे ।
व्यर्केन्दुजूकादिगतो यदि धनमृणमजादिसंस्थश्चेत् ।
कक्यादिस्था कोटिज्या व्यर्केन्दौ तु मेषमुखसंस्थे ॥
स्याद्धनमेतद् व्यर्केन्दौ जूकादिस्थितो गृहे तु ऋणम् ॥
व्यर्केन्द्रोर्बाहुज्या कोटिज्यान्योन्यगुणितराशिः स्यात् ।
लिप्ताद्यं फलमोजे स्वं युग्मे स्वर्णमन्वहं खेटे ॥
साधनसूर्यभुजज्या कोटिज्या संहता च पुनरेषा ।
सत्याङ्घ्रिवेदनिघ्ना प्राणकलान्तरमितीह सा प्रोक्ता ॥

प्राणकलान्तरनिहता ग्रहगतयश्चन्द्रलिप्तिका विहृता ।
लिप्तादिकं भवेत् फलभोजे ऋणं युग्मगे धनं सूर्ये ॥
संस्कारपञ्चकैरेतैरिन्दुर्दृक्समान एव भवेत् ।
गतिरस्य तु पूर्वापरखगयोः स्यादन्तरं गतैष्येण ॥'

इत्यादि । तस्मिन्नेव शङ्करभारतीन्द्रकृते खचर-दर्पणे द्वितीयाध्याये पञ्चमाध्याये च प्रोक्तम्—

'मान्दैककर्मसंस्कृतचन्द्रार्कौ तिथिभयोगकरणानाम् ।
योग्यौ स्यातां ग्रहणे चन्द्रोऽन्यैः संस्कृतो ग्राह्यः ॥
ग्रहणग्रहोदयास्तश्रृङ्गोन्नतिखचरयोगकालेषु ।
दृक्सिद्धेन्दुः साध्यः स्यादेवं नेतरक्रियासु बुधैः ॥'

पञ्चशतवर्षेभ्यः प्राक् कृते गणकानन्दे पञ्चमाध्याये—

'कर्तव्याः पञ्च संस्कारा मध्यखेटेषु सर्वदा ।
पूर्वध्रुवः प्रथमतस्त्रिगुणाब्दस्ततः परम् ॥
देशान्तरं बीजफलं बाहोः फलमिति क्रमात् ।
सूर्यज्ञयोर्बीजफलमनुक्तं शास्त्रकर्तृभिः ॥
चन्द्रोच्चस्य तथा राहोश्चन्द्रार्कग्रहणादिषु ।
आवश्यकत्वात् कर्तव्यं न तिथ्यानयनादिषु ॥'

एवं षट्शतीपूर्वनिर्मितायां सकलनिगमागमपारदृश्वनः सायणमाधवापरनामधेयतया ख्यातस्य श्रीविद्यारण्यस्वामिनो दृग्गणितप्रभायां सूर्यसिद्धान्तसमानीता ग्रहा एव ग्राह्या उक्ताः, न दृग्गणितागताः । सर्वेऽप्येते तिथ्युत्पत्ति ग्रहाणां साधनञ्च न जानन्ति स्म, नक्षत्रसूचका ह्येते । एतैरुक्तव्रताद्याचरणेन अन्धतामिस्रप्राप्तिरित्यादि व्याहरणं तु उन्मादविलसितमेव । बीजसंस्कारदृग्गणितनिषेधकवचनानि केवलं भूपृष्ठीयसंस्कारनिषेधपराण्येवेति सङ्कोचे मानाभावात् ।

किञ्च पूर्वोक्तैर्वचनैरविशेषेण बीजादिसंस्कारनिरूपणपूर्वकं बीजसंस्कारसामान्यनिषेधः । किञ्च—यथा प्रख्यातैर्ग्रन्थकारैर्ग्रहणादिषु बीजादीनामङ्गीकरणं तिथ्यादिषु तन्निषेध इति व्यवस्थाकृताऽस्माभिः प्रदर्शिता तथा प्राचीनैः कैश्चित् त्वदुक्तव्यवस्थाङ्गीकृता चेत् प्रदर्श्यताम् । न च प्रमाणविशेषमन्तरा निषेधसामा-

न्यस्य निषेधविशेषपरत्वमापादयितुं शक्यम् । 'मा हिंस्यात्सर्वाभूतानी'ति निषेधस्य तु 'अग्निषोमीयं पशुमालभेते'ति विशेषवचनेन हिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः इति सङ्कोचः प्रमाणसिद्धिः । किञ्च 'ग्रहणादि परीक्षेत न तिथ्यादि कदाचने'ति विषयभेदेन बीजादिग्रहणनिषेधव्यवस्था महर्षिणा व्यासेनैव कृता विद्यते । तथैव स्पष्टव्यवस्था यावन्नोपलभ्येत, तावन्नान्यकल्पनावकाशः । किञ्च—त्वत्पक्षे एकेनैव वचनेन तिथ्यादिष्वेव बीजनिषेधः, भूपृष्ठीयस्यैव बीजस्य निषेधः इति गौरवम्, अर्थभेदेन वाक्यभेदश्च, अनुक्तकल्पनञ्चेत्यनेके दोषाः । अस्मत्पक्षे तु वचनानुरोधेन तिथ्यादिषु बीजनिषेधो ग्रहणादौ तु तदभ्युपगमः ।

क्वचिच्च बीजौ अभ्युपगतावपि धर्मशास्त्रवशात् बाणवृद्धिरसक्षयसिद्धान्तोपपादकत्वेनैव ग्राह्यौ, तदपि श्रीनिवासीय-वैखानसागमवचनसिद्धमेव ।

ननु 'भचक्रनाभिदृक्सिद्धैः कुर्यात् श्राद्धव्रतादिकम्' भचक्रनाभिदृक्सिद्धैः (भूकेन्द्रीयदृक्सिद्धैः) ग्रहतिथ्यादौ श्राद्धादिकं कुर्यात् इति च पार्वणश्राद्धाद्यर्थमपि दृक्सिद्धतिथिग्रहणमनुमतमेव इति चेन्न । धर्मशास्त्राविरोधेन दृक्सिद्धग्रहतिथ्यादौ पार्वणेतरश्राद्धादीनामनुष्ठानेन उक्तवचनानां चरितार्थत्वेन दृग्गणितानुरोधेन तिथीनां परमक्षये पार्वणश्राद्धकालालाभेन धर्मशास्त्रविरोधेन तदर्थं बाणवृद्धिरसक्षयमानमितातिथीनामेव ग्रहीतुं योग्यत्वात् । किञ्च चरबीजसंस्कृता दृक्सिद्धाऽपि यदि बाणवृद्धिरसक्षयमानमिता स्यात् तदा दृक्सिद्धायामपि श्राद्धादिकरणे न दोषः । निर्बीजसूर्यसिद्धान्तरीत्या चरबीजकैर्वा, बाणवृद्धिरसक्षयसिद्धान्तानुरोधिनी तिथिरेव धर्मशास्त्रकर्मोपयोगिनीति नैकधा सिद्ध्यत्येव । अन्यथा दृग्गणितनिषेधवचनविरोधोऽपरिहार्य एव । न च षोडशिग्रहणाग्रहणवद्विकल्पः ; गत्यन्तरसत्त्वात् । गत्यन्तराभावे तुल्यबलविरोध एव विकल्पस्येष्टत्वात् । न च प्रतिप्रसववचनमिदम्; तथात्वे निषेधवचनानां निरवकाशत्वात् ।

न च तथात्वे विधानवचनस्यापि निरवकाशत्वापत्तिरिति वाच्यम्; ग्रहणग्रहयुत्यादौ तस्य सावकाशत्वात् । न च निषेधवचनस्यापि भूपृष्ठीयदृक्कर्मनिषेधेन सावकाशत्वमेवेति वाच्यम्; तथात्वे प्रतिप्रसवत्वानुपपत्तेः । किञ्च—यदि निषेधवचनानां भूपृष्ठीयदृक्कर्मनिषेध एव तात्पर्यं तदा 'यस्मिन् पक्षे यत्र काले येन

दृग्गणितैक्यकम्' इत्यादितिथिनिर्णयादिबोधकसामान्यवचनैरेव कार्यनिर्वाहे विशिष्य 'भगकनाभिदृक्सिद्धे कुर्याच्छ्राद्धव्रतादिकम्' इति विधेर्वैयर्थ्यापत्तेः। यदि तु सामान्यवाक्यैरस्यैकवाक्यता, तदा तु दृग्गणितनिषेधकवाक्यैः सुतरामस्य सङ्कोचः।

केचित्तु—आर्षमूलाभावाद् अप्रमाणमेवेदं वचनम्।

अन्ये तु—ईदृक्षैरेव वचनैः श्राद्धव्रतादिके दृक्कर्मसाधितासु तिथिषु ये कुर्वन्ति तान् निन्दित्वा सूर्यसिद्धान्तानुसारिणीष्वेव तिथिषु श्राद्धव्रतादीनां कर्तव्यतामाह—'दृक्सिद्धखेटग्रहसाधितासु' इत्यादि;

'तथापि सन्तो बहवोऽत्र धार्मिकाः पुरातनाचारमशाजहन्तः।
सूर्यांशजोक्ताजितकाल एव कर्माणि कुर्वन्ति सुखं लभन्ते॥'
(स्कान्दे कलिमाहात्म्ये व्यासः)।

इति निषेधापेक्षितनिषेध्यसमर्पकत्वेनेदं वचनं सार्थकमाहुः। न च विधिप्राप्तस्य नात्यन्तबाध इति वाच्यम्; 'गवेधुक् यवाग्वा जुहुयादित्यादि'विधिच्छायवचनानामिव अस्यापि विधिच्छायत्वेन मुख्यविधित्वाभावात्।

अपि च—निषेधवचनानां भूपृष्ठीयदृक्कर्मनिषेधपरत्वे वस्तुतो दृग्गणितैक्यानुपपत्त्या 'यस्मिन् पक्षे यत्र काले' इति वचनस्यैव बाधापत्तिः। भूपृष्ठीयलम्बननतिसंस्काराणामभावे दृश्यत्वानुपपत्त्या दृग्गणितैक्येऽपि सङ्केतमात्रमेव स्यात्।

ननु पीयूषधारायाम् 'चलसंस्कृततिग्मांशोः सङ्क्रमो यः स सङ्क्रमः' इति वशिष्ठमतेन चलसंस्कृतस्य सूर्यस्य सङ्क्रमः सायनसङ्क्रम एव सङ्क्रम इत्युक्तम्, निरयणसङ्क्रान्तिरेव पुण्यदा भवतीति मतान्तरञ्च तत्रैव खण्डितम्—

'पुण्यदां राशिसङ्क्रान्तिं केचिदाहुर्मनीषिणः।
नैतन्मम मतं यस्मान्न स्पृशेत्क्रान्तिकक्षया॥'

इति वशिष्ठसिद्धान्तवचनञ्च तत्रैवोद्धृतम्, राशिसङ्क्रान्तिरूपाया निरयणसङ्क्रान्तेः दृश्यत्वाभावात् क्रान्तिकक्षया सम्बन्धाभावान्न तस्याः सङ्क्रान्तित्वमिति भावः।

अन्ये तु—सूर्यस्य क्रान्तिवृत्ताविश्लेषाभावात् तदस्पर्शस्य प्रसङ्ग एव नास्तीति निर्युक्तिकं यद्यप्येतद्वचनम्; तथापि चन्द्रशुक्रादीनां क्रान्तिवृत्तसम्बन्धाभावात् तेषामेव सङ्क्रमस्य वस्तुतोऽसङ्क्रमत्वम्।

एवमेव— 'अयनांशकतुल्येन कालेनैव स्फुटं भवेत् ।
मृगकर्कादिगे सूर्ये याम्योदगयने सति ।
तथा संक्रान्तिकालाः स्युरुक्ता विषुवदादयः ।।'
( हेमाद्रिकृते चतुर्वर्गचिन्तामणौ, पृ० ४३६-३७)

इत्यादिभिः हेमाद्रिवचनैरपि सायनसङ्क्रमस्यैव पुण्यकालत्वं ग्राह्यत्वञ्चोक्तम् इति चेन्न । वशिष्ठमतेन तथात्वेऽपि सौरमतस्यैव विशेषतोऽस्मिन् कल्पे ग्राह्य-त्वोक्त्या तन्मतस्येदानीमग्राह्यत्वात् । अत एवोक्तं भगवता व्यासेन—

'दृक्सिद्धखेटग्रहसाधितासु कुर्वन्ति केचित्तिथिषु प्रमादात् ।
श्राद्धादिकं तत्पितृशापतस्ते पुण्यक्षयं दुर्गतिमाप्नुवन्ति ।।
तथापि सन्तो बहवोऽत्र धार्मिकाः पुरातनाचारमथाजहन्तः ।
सूर्यांशजोक्तार्जितकाल एव कर्माणि कुर्वन्ति सुखं लभन्ते ।।'

—स्कान्दे कलिमाहात्म्ये ।

'सौरोपनिषदेवाद्य कल्पे त्वस्मिन् सनातनी ।
यामादित्यः स्वयं प्राह मयाय परिपृच्छते ।।
कालज्ञानं तु तत्सिद्धं विशुद्धं नान्यदुच्यते ।
तद्विरुद्धं तु यत्सर्वमपरिग्राह्यमेव तत् ।।'

(भगवान् व्यासः—आनन्दगिरिकृतस्मृतिसमुच्चयवचनं पञ्चाङ्गनिर्णये )

यथाकथञ्चिद् बीजरहितगणितनिर्णयादेशयोः पापहेतुत्वे भूपृष्ठीयबीज-दृक्कर्मादिनिषेधे तत्रापि तदापत्तिः स्यात् । शास्त्रवचनेन तथाकरणास्यादोषत्वे नात्रापि दण्डवारितम, शास्त्रप्रमाणनिचयस्य प्रदर्शितत्वात् ।

यद्यपि कलात्मिकैव तिथी, रविचन्द्रयोर्द्वादशान्तरेण व्यज्यते; तथापि वाण-वृद्धिरसक्षयरूपा तिथिः कलाप्राधान्येन व्यपदिश्यते, तदधिकसप्तवृद्धिदशक्षयरूपा तु द्वादशान्तरप्राधान्येन व्यपदिश्यते ।

पुरुषार्थचिन्तामणौ उपाकर्मप्रकरणे 'श्रावणपौर्णमास्याः सूर्योदयमारभ्य प्रवृत्ताया द्वितीयदिने मुहूर्तत्रयसत्त्वस्यासम्भवात्' इत्युक्तम्, सप्तवृद्धिपक्षे कथमसम्भवत्वोक्तिः सङ्गता स्यात् ?

एवमेव वीरमित्रोदयेऽपि समयप्रकाशे एकादशीप्रकरणे—'अत्र विद्धा सकलमते सूर्योदयवेधेनैव, अरुणोदयवेधमादाय अष्टादशभेदासम्भवात् तावद् ह्रासवृद्ध्योरसम्भवात् ।' तत्रैव च पूर्वेद्युः षण्मुहूर्तपञ्चमीविद्धायाः षष्ठ्याः त्रिमुहूर्तक्षयासम्भवेन उत्तरदिने त्रिमुहूर्ताया अवश्यम्भावित्वात् ।

निर्णयसिन्धौ मदनरत्ने च 'मुहूर्तैः पञ्चभिर्विद्धे'ति ऋष्यशृङ्गवचने—'अत्र मुहूर्तपञ्चकम् अरुणोदयमारभ्य ज्ञेयम्, अन्यथोत्तरदिने एकादश्यभावासम्भवात्' इत्यनेन अरुणोदयमारभ्य पञ्चमुहूर्तवेध इत्युच्यते । तथा निर्णयसिन्धुटीकायां 'त्रिमुहूर्ताधिकक्षयवृद्ध्योरभावेने'ति (पृ० २६५) । एवं समयप्रकाशे 'पञ्चमुहूर्तविद्धाया एकादश्या ग्राह्यत्वञ्च यदा दशमी पञ्चमुहूर्ता, परदिने एकादशी द्विमुहूर्ता, द्वादशी च क्षयं गता तदा ज्ञेयम्' इत्यादिग्रन्थदर्शनेन बाणवृद्धिरसक्षय एव तिथीनां निबद्धकृतामभिमत इति स्पष्टम् ।

यदप्युक्तम्—"'बाणवृद्धिरसक्षय' इति वाक्येन धर्मशास्त्रज्ञैस्तिथीनां सन्ध्यंशकाल उक्तः । यदा कर्मकालव्यापिनी तिथिरुभयदिनेऽपि न लभ्येत, यदि वोभयदिनेऽपि मिलेत्, तदा सन्ध्यंशकालोपयोगः । तन्निर्णयश्चानेन बोध्यते । वर्धमानतिथौ षड्घटीकालः सन्ध्यंशः, क्षीयमाणायाञ्च पञ्चघटीकालः सन्ध्यंश इति गणितविज्ञम् । तथा च वर्धमानतिथौ भोगकालात् षड्घटिकाः न्यूनाः कृत्वा क्षीयमाणायाञ्च पञ्चघटिकाः सम्बद्ध्य धर्मनिर्णयः कार्यः" दृग्गणितमीमांसायां पञ्चमेऽध्याये ... प्रपञ्चितम् । तत्र बाणवृद्धिरसक्षयवचनं वेदकालिकं त्रिकालदर्शिनां मुनीनां वचनमुक्तम् । परन्तु कस्य मुनेः कुत्रत्यमिति निर्देशाभावात् तत् निर्मूलप्रतिज्ञामात्रम् ।

सोपपत्तिकानामिति वक्तव्ये छन्दःसिद्ध्यर्थं सोत्पत्तिकानामिति वक्ति । समन्वयो वर्णित इति स्थाने समन्वयं वर्णितमिति प्रयुङ्क्ते । तथाऽयं समन्वयः श्रुतिसम्मत इति वक्ति । परन्तु कस्यां श्रुतौ कस्मिन् धर्मशास्त्रे निबन्धे वाऽयं निर्णय इति न वक्ति, ततो निर्मूलं तदपि । उभयाव्याप्तौ उभयव्याप्तौ वर्धमानतिथौ षड्घटिका अपसार्य क्षीयमाणायां पञ्चघटिकाः संवर्ध्य निर्णयः कार्य इति कस्य शास्त्रवचनस्यानुरोधेन कस्मिन् निबन्धे धर्मशास्त्रे वा गदितमिति दर्शयितुमशक्यत्वात् ।

किञ्च---'बाणवृद्धिरसक्षयौ' इत्यत्र केन पदेनैतत् सिद्धयति यत् क्षीयमाण-वर्धमानतिथिषु वृद्धिक्षयौ कर्तव्याविति ? आधारकर्तव्यांशाध्याहारे किं बीजम् ? 'स्यातां तत्कालबीजोत्थौ बाणवृद्धिरसक्षयौ' इह तु 'स्याता' मिति पदेन 'बीज-निमित्तकसत्तावन्तौ' इत्युक्तम् । 'बाणवृद्धा रसक्षीणा ग्राह्या नान्या तिथिः क्वचित्' इति स्पष्टं तिथिद्वैविध्यं विज्ञायते । तत्र बाणवृद्धिरसक्षीणा धार्मिकेषु कर्मसु ग्राह्या, नान्या अष्टवृद्धिदशक्षीणा । ज्योतिर्विदाभरणे च--

'वृद्धिक्षयौ स्तः परमौ तिथौ सदा व्यर्धा रसाः साङ्घ्रिरसाश्च नाडिकाः ।'

'सार्धबाणसपादाङ्गघटीवृद्धिक्षयान्विताः ।
गृहीता धर्मशास्त्रे हि तिथयो नित्यकर्मसु ।।'

---कथमनेन त्वत्पक्षसङ्गतिः ? अतस्तादृश्यस्तिथयो भवन्ति, ता एव धर्मशास्त्रे स्वीकार्या इत्युक्तम् । नात्रापसारणसंयोजनादिकं घटते ।

किञ्च---भवन्मते तिथीनां भोगो यद्यनिश्चितस्तदा सन्धिकालोऽपि कथं निश्चेतुं शक्यः ? तथा च कथमपसृतिसंयोजनपरमिदं वाक्यं सङ्गच्छते ? निबन्धग्रन्थेषु कुत्रचिदपि न त्वदुक्तव्यवस्थानुसारेण निर्णयः, किन्तु तिथिभाग-भेदमाश्रित्यैव व्यवस्था कृता विद्यते ।

साक्षात्सरस्वत्यवतारभूता ज्योतिर्विदाभरणकाराः कालिदासाः, निगमागम-पारदृश्वानो विद्यारण्यस्वामिनोऽन्ये च निबन्धकाराः ज्यौतिषशास्त्रानभिज्ञा इति कथनं तु प्रमादविलसितमित्युक्तमेव ।

अपि च, भगवान् व्यासः स्पष्टं वक्ति---

'सौरोपनिषदेवाद्या कल्पे त्वस्मिन् सनातनी ।
यामादित्यः स्वयं प्राह मयाय परिपृच्छते ।।
कालज्ञानं तु तत्सिद्धं विशुद्धं नान्यदुच्यते ।
तद्विरुद्धं तु यत्सर्वमपरिग्राह्यमेव तत् ।।'

बीजादिकन्तु तत्र प्रक्षिप्तमेवेति निर्बीजार्कोक्तमेव इत्यनेनापि सिद्ध्यति । अत एव मयासुर-ब्रह्मगुप्तसिद्धान्तकलहे सूर्यसिद्धान्तप्रशंसापराण्येतानि वाक्यानीत्यादि स्वकपोलकल्पितमेव ।

अत एव तिथिसाधने मान्दैककर्मणैव चन्द्रार्कयोः स्फुटीकरणप्रक्रिया संविधीयते । सिद्धान्ताभरणे–

'एकेन मान्देन तु कर्मणा तौ स्फुटौ भवेतां तिथिभोगयोग्यौ ।' इति ।

सिद्धान्ततत्त्वे च—

'मान्दैककर्म चार्केन्द्वोः कुर्यात्तिथ्यादिसाधने ।
चतस्र उदयास्तादौ ग्रहणे पञ्च संस्क्रियाः ॥'

ग्रहणादावेव स्फुटाधिकारोक्ता चतुःपञ्च संस्कारा ग्राह्याः । तिथ्यादिसाधने तु मान्दैकसंस्कारेणैकेनैव स्फुटीकरणं नियमितम् । सिद्धान्ततत्त्वसमालोचनेऽपि पुरा-वचनमुद्धृतम्' "मुनिभिरपि तथैवोपदिष्टम्–

'प्रत्यहं तिथिनक्षत्रयोगस्यानयने विधुः ।
अबीजसंस्कृतो ग्राह्यो ग्रहणादौ सबीजकः ॥'

यत्र बीजमपि देयं तत्रापि बाणवृद्धिरसक्षयानुरोधेन बीजमित्येव चन्द्रीभवान-बोधकवचनस्यार्थः ।

यदुक्तम्–'ग्रहणादन्ययोगेषु कालभालग्नसाधने ।
शृङ्गोन्नत्युदयास्तेषु दृक्कर्मादाविदं स्मृतम् ॥'
'नक्षत्रग्रहयोगेषु ग्रहास्तोदयसाधने ।
शृङ्गोन्नतौ तु चन्द्रस्य दृक्कर्मादाविदं स्मृतम् ॥'

तथादौ भूपृष्ठीयदर्शनोपयोगी संस्कार एव ग्राह्यः' इति । तन्न; दर्शनानुपयोगित्वे भूगर्भीयस्य दृक्प्रत्ययानापादकत्वात् दृग्गणितत्वासिद्ध्या साङ्केतिकमेव दृग्गणित-मिति नामकरणम् । तथा च 'प्रत्यक्षं ज्योतिषं शास्त्रमि'ति मुधैव घोषः परि-कल्पितः स्यात् । अत एव पञ्चाङ्गेषु दृश्यतिथी नामभावात् दृग्गणित-पञ्चाङ्गमिति नामापि निरर्थकमेव ।

किञ्च—'प्रत्यक्षं ज्योतिषं शास्त्रम्, दृक्प्रत्ययापादकाः संस्काराः सर्वत्रापे-क्षिताः, दृग्विरुद्धाः सिद्धान्ता नाङ्गीकार्या' इत्येवमुद्घोषः क्रियते नवीनैः । परं दर्शनं तु लम्बनादिभूपृष्ठीयसंस्कारापेक्षमेव । यत्र भूपृष्ठीयदृङ्निषेधः क्रियते, तत्र कथं दृक्प्रत्ययः ? भूगर्भीयस्य यथार्थत्वमपि तेनैव भवति, तं विना सन्दिग्ध-

त्वात् । दृग्गणितेति पारिभाषिकमात्रमेव । अत एव दृक्प्रत्ययापादकसंस्कार-निषेधेन दृग्गणितमात्रनिषेधो मन्तव्यः ।

न च भूगर्भीयसंस्कारेण दृश्यता भवतीति कथं भूगर्भीयगणितस्य दृक्कर्मता ? अत एव त्वया दृक्कर्मपदेन स्वपुस्तके भूपृष्ठीयसंस्कारो गृहीतः । तदपि विरुद्ध्यते; भूपृष्ठीयसंस्कारमन्तरा दर्शनाभावादपि न भूगर्भीयसंस्कारस्य दृक्कर्मता-वक्तुं शक्यते । अत एव न तदपेक्षया भूपृष्ठीयस्य द्वितीयत्वं वक्तुं युक्तम्, किन्तु आगमिकग्रहस्थित्यपेक्ष्य-दृक्सिद्धग्रहस्थितिज्ञानस्यैव पापदृष्टिविषयत्व-मुक्तम् । उत्तमदृष्टीनमागमदृष्टित्वमेव स्तुतम्, न भूगर्भीयदृग्गणितमेवेह स्तुतम् । अत एव शास्त्रीयव्यवहारे लौकिकस्य अनावश्यकत्वमुक्तम् ।

> 'द्वितीयं पापदृष्टीनां दृक्कर्म मुनिसत्तम ।
> द्वितीयमेव दृक्कर्म नेच्छन्त्युत्तमदृष्टयः ।।
> शास्त्रीयव्यवहारेषु लौकिकं निष्प्रयोजनम् ।
> केचिदन्येऽपि नेच्छन्ति तदप्रत्यक्षकारणात् ।। (ब्र० सि०)

यदि प्रत्यक्षदर्शनानुसारमेव ज्यौतिषशास्त्रमभ्युपेयं तदा भूपृष्ठीयदृष्टेः किमर्थं पापदृष्टित्वमुक्तम् ? अदृष्टस्य भूकेन्द्रीयस्यापि कथं स्तुतिरुपपद्यते ? तस्माद् दृक्-समत्वापादकाः सर्वेऽपि संस्काराः [ न केवलं भूपृष्ठीयाः,] ग्रहणग्रहयुतिशृङ्गो-न्नत्यादिष्वेव कर्तव्याः । तदुक्तम्–

> 'द्वितीयस्फुटसिद्धश्च ग्राह्यो दृग्विषया विधुः ।
> स्पष्टीकरिष्यते चैतदूर्ध्वशृङ्गोन्नतौ विधोः ।।
> शृङ्गोन्नतियुतिच्छाया ग्रहास्तोदयसाधने ।
> बीजेन संस्कृताः खेटास्तद्धीनास्त्वन्यकर्मसु ।।'
>
> ( दृग्गणितमीमांसायाम् ४।७७ )

इति बीजमात्रसंस्कृतखेटानां शृङ्गोन्नत्यादावेव स्पष्टग्राह्यतोक्ता ।

> 'सूर्यसिद्धान्तशास्त्रेण समवेता ग्रहास्तदा ।
> नित्यकर्मण्युपादेया न तु दृग्गणितागताः ।।'

इत्यत्र चात्यन्तं स्पष्टमुक्तम् । 'श्रीसूर्यसिद्धान्तमतोद्भवार्कात् साध्यौ सदा तौ' इति ज्योतिर्विदाभरणवचनमप्युक्तमेव ।

यदुक्तम्—"सूर्यसिद्धान्तस्य राक्षसनिर्मितत्वाद्यद्यप्यनार्षत्वम्; तथापि तदानीं तस्य प्रत्यक्षसिद्धत्वात् 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति नियमानुसारेणार्षत्वमेवे"ति । तत् तुच्छम्; सूर्यांशपुरुषोक्तत्वेनैव तस्यार्षत्वाभ्युपगमात् । 'मयाय परिपृच्छते' इति मयस्य प्रश्नकर्तृत्वमेव । तदुक्तस्यैव सङ्कलनात् क्वचित्कर्तृत्वव्यपदेशः ।

यदुक्तम्—"सत्यं ज्ञानमनन्तमिति नियमेन प्रत्यक्षसिद्धत्वादार्षत्वम्" इति । तन्न; श्रुत्यर्थानवबोधात् । श्रुत्या ब्रह्मलक्षणमुच्यते, न त्वार्षत्वलक्षणम् । कोऽयं नियमः । ब्रह्मणस्तु न प्रत्यक्षप्रमाणसिद्धत्वम्, तस्य प्रमाणमात्राविषयत्वेन अप्रमेयत्वात् स्वतःसिद्धत्वाच्च । घटादीनां प्रत्यक्षसिद्धत्वेऽपि नार्षत्वम् । परीक्षितप्रमाण-सिद्धत्वमेव सत्यत्वञ्चेत् , तदा आगमप्रमाणसिद्धस्यापि आर्षत्वमेव । तदविरुद्धं प्रत्यक्षसिद्धमपि आदरणीयमेव । ग्रहणादौ तु दृग्गणितमास्तिकैरप्यभ्युपेयत एव ।

किञ्च—यदि सूर्यसिद्धान्ते दृक्समत्वापादकबीजादिकं विद्यते, बीजनिषेधो भूपृष्ठीयदृक्संस्कारनिषेधपर एव, तदा पक्षान्तरानादरपूर्वकं सूर्यपक्षस्य विशेषादरे का वाचो युक्तिः ? किमर्थं तर्ह्यर्वाधुनिकैः सूर्यसिद्धान्तप्रशंसापराणि वचनानि अनुचितपक्षपातमूलकानीत्युच्यते ? कमलाकरे तत्पक्षपातित्वं कुत आरोप्यते ? अतः सूर्यसिद्धान्तागतनिर्बीजगणितेन अङ्कवृद्धिदशक्षयसिद्धान्तो न सिद्ध्यति । 'बाणवृद्धिरसक्षय'-सिद्धान्त एव निष्पद्यते । तेनैव दृग्गणितवादिभिः सूर्यसिद्धान्त-पक्षस्तत्प्रशंसापराणि च वचनानि खण्ड्यन्ते । श्रीकालिदास-विद्यारण्यप्रभृतयश्च नाद्रियन्ते । यदि च ज्योतिर्विदाभरणकारस्य—

> 'श्रीसूर्यसिद्धान्तमतोद्भवार्कात् साध्यौ सदा तावधिकक्षयाख्यौ ।
> मार्गौ तदा सङ्क्रमकाल एव साध्यः सदा हौरिकशास्त्रविद्भिः ॥'

इत्यादिवचनानि दृग्गणितवादिनां न प्रतिकूलानि तदा तदुक्तमेव 'व्यर्था रसाः साङ्घ्रिरसाश्च नाडिकाः' इति बाणवृद्धिरसक्षयसिद्धान्तः कुतो नाद्रियते ? कथञ्च कालिदास-विद्यारण्यादयो न ज्यौतिषशास्त्राचार्या इत्युच्यते ?

तिथिनक्षत्रयोगकरणवाराणां दृश्यता नास्ति । दृग्गणितवादिपञ्चाङ्गेष्वपि भूपृष्ठस्थानां तद्दर्शनाय लम्बनसंस्कारा न क्रियन्ते । व्यतीपात-वैधृतिदर्शनायापि बहवः संस्कारा अपेक्ष्यन्ते । ते च पञ्चाङ्गीयेषु तेषु दृग्वादिभिरपि न क्रियन्ते । अत एव 'यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम्' इत्यनेन गणितागतस्य

दृष्ट्यैक्यं सम्पादनीयमिति नार्थः। किन्तु जातकोक्तफलदर्शनेन सङ्ग[illegible]रित्येवार्थः। येन आगमाश्रितेन गणितेन जातकोक्तफलं दृश्यते स एवागमो ग्राह्यः, इत्यपि केचित्। यद्यपि गणितागतास्तत्तद्दृश्यगणितानुसारेण च नक्षत्राणां योगा निर्धार्यन्ते, तथापि ते स्थूला एव। सूक्ष्मास्तु पुलस्त्याद्युक्ता गणितानपेक्षा एव।

कश्चित्तु—तिथ्यादिपरीक्षणाय बीजसंस्कारो नापेक्षित इत्येवोक्तिर्नियुक्तिक-बीजेन भ्रान्तिसम्भवाद् निर्युक्तिकबीजनिषेधपरा। किञ्च—

'यन्त्रवेधादिना ज्ञातं यद्बीजं गणकैस्ततः।
ग्रहणादि परीक्षेत न तिथ्यादि कदाचन॥'

इति विष्णुधर्मोत्तरीयवचनबलेनैव ग्रहणादौ दृक्समत्वापादकः संस्कारोऽपेक्षितो नान्यत्र। एतेन सूर्यवशिष्ठादिभिः स्वस्वसिद्धान्तग्रन्थेषु उक्तं यन्त्रादि-निर्माण-प्रयोगादिकं ग्रहणाद्यर्थमेवेति मन्तव्यम्।

यदुक्तम्—'दृग्गणितेनागमेन च ज्ञाते चन्द्रमसो राशिसङ्क्रमणे पञ्च-दशघटीतोऽप्यधिकमन्तरं भवति। सौरसूर्ये प्रतिवर्षमष्टविकला अन्तरम्, गुरु-शनिराशिसङ्क्रमणकालस्तु दिनैर्मासैश्चान्तरितो भवति' इति। तदपि तुच्छम्; 'नहि वचनस्यातिभार' इति न्यायेन यज्ञादिधर्मानुष्ठानार्थं तथाभूतस्यैव कालस्याष्ट-त्वात् यन्त्रादिज्ञात-सूर्यचन्द्रयोर्द्वादशान्तरसाध्या द्वादशान्तरप्रधाना तिथिः मन्द-फलादिसिद्ध-रविचन्द्रयोर्द्वादशान्तरसाध्या तिथिः कलाप्रधाना, द्वादशान्तरस्य व्यञ्जकत्वात्, कलायास्तु व्यङ्ग्यत्वात्, व्यङ्ग्यायामेव वह्न्यादिदेवतासम्बन्धः। देवतासम्बन्धस्य च शास्त्रैकगम्यत्वमेव, तस्य गणिताविषयत्वात्।

यदुक्तम्—'त्रिधा विभक्तस्य दिनस्य अपराह्णो मुख्योऽपराह्णः। द्विधा विभक्तस्य अपराह्णो गौणः, स्मृतिसिद्धश्च। यदि मुख्येऽपराह्णे तिथिर्न मिलेत् तदा गौणेऽपि श्राद्धं कार्यम् इत्यपि विधिज्ञैर्विहितमेव। तथा च मुख्यकालालाभे अमुख्यकालेऽपि पार्वणं भविष्यत्येव। तच्च दशक्षयपक्षेऽपि सम्भवत्येव। दिनद्वयेऽपि मुख्यो वा गौणो वा कालो न प्राप्स्यत इति तु न वक्तुं शक्यमि'ति। तन्न रमणीयम्; तादृक्-पार्वणकालबोधकवचनस्य अनुपलब्धेः। द्विधा विभक्तस्य दिनस्य उत्तरार्धो गौणोऽपराह्णस्तत्र पार्वणं कार्यमिति वचनमुपदर्शनीयम्।

न च पूर्वव्याप्तौ, परव्याप्तौ, उभयव्याप्तौ, उभयाव्याप्तौ, न्यूनाधिकव्याप्तौ, अंशमात्रव्याप्तौ (निर्णयसिन्धुः) इत्यविशेषेण षडपि भेदाः सर्वत्र ग्राह्या भवन्तीति वाच्यम्; तत्तदार्षवचनैर्निर्णयसिन्ध्वादौ विषयविशेष एव तद्व्यवस्थापनात्। न स्वातन्त्र्येण दिनं द्विधा विभज्य गौणेऽपराह्णे पार्वणं कर्तुं शक्यते, तथात्वे षड्-विभागभेदेन कृताया व्यवस्थाया लोपप्रसङ्गात्।

'आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः स्मृतः।
यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ॥'

इति दिनद्वयविभागसूचकं वचनं कुत्रत्यमिति तु नोल्लिखितम्। तदर्थकमेव वचनं मनुस्मृतौ उपलभ्यते—

'यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥' (३।२७८)

यथा शुक्लादिमासे पूर्णपक्षात् (शुक्लपक्षात्) कृष्णपक्षस्य वैशेष्यम्।

'कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथेता न तथेतराः ॥ (मनुः ३।२७६)

इत्यनेन सिद्धम्। तथैव पूर्वाह्णादपराह्णः प्रशस्तः। यथा च अपरपक्षस्य चतुर्दश्यतिरिक्ता दशम्यादय एव प्रशस्ता न सर्वास्तथैव द्विधा विभक्तस्य दिवसस्यापराह्णेऽपि पञ्चधा विभक्तस्यापराह्ण एव प्रशस्तः, सामान्यवचनस्य विशेषवचनेन एकवाक्यत्वोपपत्तेः। एकोद्दिष्टश्राद्धपरमेव एतद्वचनम्, तस्य मध्याह्ने विधानात 'एकोद्दिष्टन्तु मध्याह्ने' इति निर्णयसिन्धूद्धृत-हारीतवचनात।

यदुक्तम्—'सूर्यसिद्धान्तादिरीत्याऽपि ५४ घट्यात्मिका तिथिर्भवति। तथा च तत्र पक्षेऽपि समानैवापत्तिः। परं धर्मशास्त्रे तत्र व्यवस्था विद्यते—'चतुर्थी चन्द्रोदयव्यापिनी ग्राह्या, दिनद्वये तदभावे परैव।' एवं प्रदोषसमये शिवपूजा-नक्तभोजनात्मकं प्रदोषव्रतम्। 'तत्र सूर्यास्तमनगोचर-त्रिमुहूर्तात्मकप्रदोषव्यापिनी त्रयोदशी ग्राह्या। उभयत्र सर्वथा व्याप्यभावे परैव' (धर्मसिन्धुः)। एवमेव पार्वणश्राद्धेषु—'पार्वणे त्वपराह्णव्यापिनी ग्राह्या, दिनद्वये तद्व्याप्तौ तदसाम्ये वांशतः समव्याप्तौ वा पूर्वा' इति। तन्न; निर्णयसिन्ध्वादिभावानवगमात्।

तथा हि—

"स वा अपराह्णे ददाति ...अपराह्णः पितृणाम्। तस्मादपराह्णे ददाति।" ( शत० ब्रा० २।४।२ ), 'अपराह्णे पिण्डपितृयज्ञश्चन्द्रदर्शनेऽमावास्यायाम्' ( कात्यायनश्रौतसूत्र ४।१ ) इत्यादिवचनैरमावास्यायामपराह्णे पिण्डपितृश्राद्धं प्राप्तम्। तत्रैव च—

"आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टन्तु मध्यमे।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्॥"

इति हारीतवचनेन 'अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत्' इति पृथ्वीचन्द्रोदये वृद्धगौतमवचनेन च पार्वणश्राद्धमपि कस्यचित् प्राप्तम्। तत्रापराह्णस्य पिण्डपितृयज्ञेनैव उपक्षीणत्वात् पार्वणश्राद्धकाललोपप्रसङ्गे सायाह्नेऽपि पार्वणश्राद्धमनुमतम्। तत्र पार्वणश्राद्धसम्बन्धे—

"अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत्।"

इत्यादिवचनैः "कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।" इति वचनानुरोधेन पूर्वेद्युरेव परेद्युरेव वा यत्रापराह्णव्याप्तिः स्यात्, सैव तिथिः पार्वणश्राद्धार्थं ग्राह्या। दिनद्वयेऽप्यपराह्णव्याप्तौ तु पूर्वैव ग्राह्या। एवं दिनद्वयेऽपि अपराह्णकालास्पर्शे समव्याप्तौ च पूर्वैव ग्राह्या। विषमव्याप्तौ अर्थात् कस्मिंश्चिदपराह्णे तिथेर्न्यूनयोगे कस्मिंश्चिदधिकयोगे वा अधिकयोगोपेता ग्राह्या।

"द्व्यपराह्णव्यपिनी स्यादाद्विकस्य यदा तिथिः।
महती यत्र तद्विद्धां प्रशंसति महर्षयः॥" इति मरीचिस्मृतेः।
"द्व्यहेऽप्यव्यापिनी चेत्स्यात् मृताहस्य यदा तिथिः।
पूर्वविद्धा प्रकर्तव्या त्रिमुहूर्ता भवेद्यदि॥"

इति सुमन्तुवचनेन दिनद्वये अपराह्णव्याप्त्यभावेऽपि यदि पूर्वदिने त्रिमुहूर्ता मृताहस्य तिथिर्भवेत्तदा अपराह्णानन्तरमपि पूर्वदिने सायाह्ने पार्वणश्राद्धं कार्यम्। अत एव 'अपराह्णव्याप्त्यभावे सायाह्नव्याप्तिरिष्यते' इति दगणितप्रभायां श्रीमाधवाचार्याः।

अत्र यदि बाणवृद्धिरसक्षयसिद्धान्तोऽभ्युपेतः स्यात्, तदा अपराह्णानन्तरं कस्याश्चित्तिथेरारम्भे तस्याश्च परमक्षये परस्मिन् दिने अपराह्णात् प्रागेव तत्-

समाप्तावपि पूर्वस्मिन् दिने त्रिमुहूर्तायास्तिथेः सत्त्वात् तत्र पार्वणश्राद्धमनुमतम्। सप्तवृद्धिदशक्षयसिद्धान्ताभ्युपगमे तु तिथेः परमक्षये पूर्वदिने मुहूर्तमात्रावशिष्टे सायाह्नमारभ्य परदिने अपराह्णात् प्राक् समाप्तायां तस्यां 'त्रिमुहूर्ता भवेद्यदि' इति वचनानुरोधेन पूर्वदिने त्रिमुहूर्तायास्तस्यास्तिथेरभावात् सायाह्नव्याप्ते-रप्यभावेन पार्वणश्राद्धलोप एव स्यात्। तस्मादुभयत्रापि पार्वणश्राद्धकाल-लोपो न स्यादिति बाणवृद्धिरसक्षयसिद्धान्त एवोररीकार्यः।

न च "एतच्च पार्वणश्राद्धं कुतुपादिमुहूर्तपञ्चके कार्यम्" इति धर्मसिन्धु-वचनेन मुहूर्तविशिष्टं सायाह्नमारभ्य प्रवृत्तायाः तिथेः कुतुपोत्तरार्धात् प्रागेव समाप्तावपि कुतुपपूर्वार्धस्य पार्वणश्राद्धकालत्वात् न श्राद्धलोप इति वाच्यम्; तत्र कुतुपशब्देन अपराह्णस्पृष्टकुतुपस्यैव ग्रहणात्। अपराह्णास्पृष्ट-कुतुपाधिकर-णकपार्वणश्राद्धानुष्ठानस्य निष्प्रमाणत्वात्, अपराह्णबोधकार्षवचनस्य सत्त्वात्।

दिनस्य पञ्चविभागास्त्रिमुहूर्तकाः—तत्राद्यो भागः प्रातःसंज्ञः, द्वितीयः सङ्गवः, तृतीयो मध्याह्नः, चतुर्थोऽपराह्णः, पञ्चमः सायाह्नः। दिनस्य पञ्चदशो भागो मुहूर्त इति च शास्त्रीयां परिभाषाः।

एवञ्च—निश्चितप्रामाण्यमेव प्रत्यक्षमितरबाधकं भवति नचात्र प्रामाण्यं निश्चितम्, आगमविरोधात्। आगमेन ग्रहगतयो मानवचक्षुर्ग्राह्या न भवन्तीति स्पष्टमुक्तम्। मनुष्यापचाररुष्टरुद्रपार्षदादिकृतान्यथामानसम्भवोऽप्युक्तः। भादि-बाधाभावानिर्णयाच्च।

ननु प्रत्यक्षमेव प्रबलमनुमानागमबाधकम्, नानुमानागमौ तद्बाधकौ। प्रत्यक्षा-प्रामाण्ये तद्विरोधाभावेन तयोः प्रामाण्यम्, तयोः प्रामाण्ये च तद्विरोधात् प्रत्यक्षा-प्रामाण्यम् इत्यन्योन्याश्रयः। न च प्रत्यक्षस्य प्रामाण्येऽन्योन्याश्रयः; तस्यान-पेक्षत्वादिति वाच्यम्। चन्द्रतारकादिपरिमाणप्रत्यक्षे अनुमानागमविरोधेन प्रत्यक्षस्या-प्रामाण्यदर्शनात्। दूरसूक्ष्मदर्शकयन्त्रादीनामपि व्यभिचारित्वं दृष्टमेव। सूक्ष्मं स्थूलं स्थूलञ्च सूक्ष्मं नेदिष्ठं दविष्ठं दविष्ठञ्च नेदिष्ठं सीसकादियोगेन दृश्यत एव। तेन प्रत्यक्षस्यापि स्वप्रामाण्यसिद्ध्यर्थमितराविरोधस्य अपेक्षैव। तथा च तुल्यस्तत्राप्यन्योन्याश्रयः।

परस्परविरोधेन प्रामाण्यसन्देहे अनाप्ताप्रणीतत्वादिना प्रमाजनकत्व-व्याप्तेर्वेदतन्मूलकागमस्य प्रामाण्यनिश्चये जाते तेन सम्भावितदोषस्य प्रत्यक्षस्यैव

बाधात्। तेन नागमप्रामाण्येऽन्योन्याश्रयः। अन्यथा देहात्मैक्यप्रत्यक्षबुद्धया बाधात् देहभिन्नत्वमप्यात्मनो नानुमानागमाभ्यां सिद्धयेत्।

यदुक्तम्—'प्रत्यक्षं जात्यैव प्रबलम्, तेनैव औष्ण्यप्रत्यक्षेण वह्निशैत्यानुमानबाधः। न च तत्रोपजीव्यनिबन्धनप्रत्यक्षस्य बाधकत्वम्; धर्म्यादिश्चक्षुषैव सिद्धेस्त्वचोऽनुपजीव्यत्वात्। अनुमित्यग्रहीतरेखोपरेखादिग्राहकत्वाद् तदनिवर्तितदिमोहादिनिवर्तकत्वाच्च प्रत्यक्षस्य प्राबल्यमि'ति। तत्तुच्छम्; धर्म्यादिग्रहेऽपि त्वचं विना साध्यप्रसिद्धेरभावेन त्वाचप्रत्यक्षस्य उपजीव्यत्वेनैव अनुमितिप्रतिबन्धकत्वात्। तेन न जात्या प्रत्यक्षस्य प्राबल्यम्। तदगृहीतग्राहित्वमपि न प्राबल्यप्रयोजकम्; प्रत्यक्षागृहीतधर्मादिग्राहकत्वेन परोक्षप्रमाणस्यैव प्राबल्यापत्तेः। नाप्यनुमानाद्यनिवर्तितदिङ्मोहादिनिवर्तकत्वेन प्राबल्यम्; तावता वैधर्म्यमात्रसिद्धेः। अन्यथा त्वाचप्रत्यक्षानिवर्तितवंशोरगभ्रमनिवर्तकत्वात् चक्षुषोऽपि त्वगपेक्षया प्राबल्यं स्यात्। ततश्च चित्रनिम्नोन्नतज्ञानस्य चाक्षुषस्य तद्विरोधित्वाचज्ञानाद्बाधो न स्यात्।

आगमस्य तु प्राबल्यम् 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्'। इति (अद्वैतसिद्धिगत) आगमेन सिद्धयति। 'एतद्धि वै मनुष्येषु सत्यं निहितं यच्चक्षुस्तस्मादाचक्षाणमाहुरद्रागिति स यद्यदर्शमित्याह अथास्य श्रद्धती'ति ऐतरेयब्राह्मणस्थानाम्, 'द्वौ विवदमानावेयातामहमद्राक्षमहमश्रौषमिति य एवं ब्रूयादहमद्राक्षमिति तस्मा एव श्रद्दध्याम' इति वाजसनेयि-ब्राह्मणस्थानां श्रुतीनां परीक्षितप्रामाण्यानां चक्षुरादीनां मानान्तरादपरीक्षितप्रामाण्यकाद् बलवत्त्वबोधकत्वं ज्ञातव्यम्। अन्यथा देहात्मैक्यबोधकप्रत्यक्षस्य चन्द्रतारकादिपरिमाणबोधकप्रत्यक्षस्य च बाधाभावप्रसङ्गो उक्त एव। चक्षुर्जन्यस्य चित्रस्थनिम्नोन्नतप्रत्यक्षज्ञानस्य च बाधो न स्यात्। न च ज्येष्ठत्वात् प्रत्यक्षस्य प्राबल्यम्, तथा त्वेरजतज्ञानस्य ज्येष्ठस्य कनीयसा शुक्तिज्ञानेन बाधो न स्यात्।

ननु प्रत्यक्षस्य असञ्जातविरोधित्वेन उपक्रमन्यायेन प्राबल्यम्। यथा—'ऋग्वेदो अग्नेरजायत' इत्युपक्रमानुरोधेन 'उच्चैर्ऋचा क्रियते' इत्यत्र मन्त्रमात्रवाचिन ऋक्शब्दस्य मन्त्रब्राह्मणात्मकवेदपरत्वमास्थीयते, तथैव प्रथमजातप्रत्यक्षानुरोधेन

अन्यप्रमाणनयनमिति चेन्न। उपक्रमन्यायस्य तुल्यबलविषयत्वेनात्र गृहीतप्रमाणभाव-श्रुत्याद्यपेक्षया भ्रमविलक्षणत्वेन अनिश्चितप्रत्यक्षस्य न्यूनबलत्वेन तन्न्याया-विषयत्वात्। अन्यथा 'इदं रजतमि'ति भ्रमोऽपि 'इयं शुक्तिरि'त्याप्तोपदेशापेक्षया प्रबलः स्यात्।

यदप्युक्तम्–'लिङ्गात् श्रुतेरिव शीघ्रगामित्वात् प्रत्यक्षस्य प्राबल्यमि'ति। तदपि न; परीक्षितस्य मन्थरगामिनोऽपि प्राबल्यात्।

यदप्युक्तम्—'अनुमानागमापेक्षिताशेषार्थग्राहकतया उपजीव्यत्वेन प्रत्यक्षस्य प्राबल्यमिति। तन्न; तथात्वे 'इदं रजतम्' इति भ्रमस्य बाधोपजीव्यत्वेन तद्विरुद्धाया 'नेदं रजतमि'ति बुद्धेरनुदयापत्तेः। अपरीक्षितं प्रत्यक्षं परीक्षितानुमानापेक्षयाऽपि दुर्बलम्। तत एव 'नीलं नभ' इति प्रत्यक्षं नभो नीरूपत्वानुमानेन बाध्यते।

ननु प्रत्यक्षं यदि शब्दबाध्यं स्यात्, तदा 'तस्मा धूम एवाग्नेर्दिवा ददृशे नार्चिः' इत्याद्यर्थवादस्य 'अदितिर्द्यौरिति' मन्त्रस्य दृष्टविरोधादप्रामाण्ये प्राप्ते 'गुणवादस्तु' इति जैमिनिना गौणार्थता नोच्येत। 'आदित्यो यूपः' 'यजमानः प्रस्तरः' इत्यादीनाञ्च गौणार्थता न स्यात्। न च तात्पर्यग्राहकलिङ्गानामभावात् तत्र श्रुतीनां दौर्बल्यमिति वाच्यम्; अपूर्वत्वादितात्पर्यग्राहकलिङ्गस्य तत्र सत्त्वादिति चेन्न। वाक्यशेष-प्रमाणान्तरसंवादार्थक्रियादिपरीक्षापरीक्षितस्य प्रत्यक्षस्य विरोधेन अतत्परस्य आगमस्य दौर्बल्येऽपि तत्परस्यागमस्य दौर्बल्याभावात्। अर्थवादस्य विधिशेषत्वेन अतत्परत्वनिश्चयात्।

ननु नान्यशेषत्वममुख्यार्थत्वप्रयोजकम्, किन्तु मानान्तरविरोध एव, 'इयं गौः क्रय्या बहुक्षीरा' 'सोऽरोदीदिति' मानान्तराविरोधेन अमुख्यवृत्तेरनाश्रयणात्। मानान्तरविरोधे तु अनन्यशेषेऽपि 'सोमेन यजेत' इत्यत्र प्रत्यक्षाविरोधायैव सोमवता यागेनेति मत्वर्थलक्षणाश्रयणमिति चेन्न। भावानवबोधात्। तथा हि–तात्पर्यविषयीभूतार्थकस्यैव मुख्यार्थत्वम्, न शब्दार्थमात्रबोधकत्वम्। अन्यार्थतात्पर्यकत्वमेव अमुख्यार्थत्वम्, न लाक्षणिकार्थत्वम्, तेन। 'सोमेन यजेते'त्यादिविशिष्टविधेर्विशेषणे तात्पर्याभावात् मत्वर्थलक्षणायामपि मुख्यार्थत्वमेव। एवं 'कृष्णलान् श्रपये'दित्यत्रापि उष्णीकरणलक्षणायामपि मुख्यार्थत्वमेव 'यत्परः शब्दः स शब्दार्थ' इति प्रसिद्धः।

अत एव 'विषं भुङ्क्ष्वेति वाक्यस्य शत्रुगृहभोजननिवृत्तिपरत्वेन अशक्यार्थत्वेऽपि मुख्यार्थतैव। परमतात्पर्यविषयीभूतार्थप्रतीतिनिर्वाहायैव सर्वार्थवादेषु लक्षणा। विधिप्राशस्त्ये लक्षणातः प्रागर्थवादवाक्यार्थज्ञानम्। तस्य प्रमाणान्तरविरोधे बाधः। यथा—'आदित्यो यूपः,' तत्र गुणवादमात्रम्। प्रमाणान्तरप्राप्ते त्वनुवादः, यथा—'अग्निर्हिमस्य भेषजम्'। उभयत्राबाधिताज्ञातज्ञापकत्वाभावादप्रामाण्यम् यत्र प्राप्ति विरोधौ न स्तस्तत्र प्रामाण्यात् भूतार्थवादत्वम्। यथा—'इन्द्रो वृत्राय वज्रमुदयच्छत।' गुणवादे आदित्यसदृशो यूप इति गौणार्थो प्रतीत्यापि 'यूपे पशुं बध्नातीति' विधिप्राशस्त्यमुपपद्यते। 'प्रत्यक्षसिद्धौ नहि वाक् प्रमाणम्' इति वाक्यस्य तु नागमप्रामाण्यप्रातिकूल्यम्, 'अग्निर्हिमस्य भेषजम्', 'आदित्यो यूपः' इत्यादौ परीक्षितप्रत्यक्षसिद्धौ आगमवादिभिरपि ज्ञातबाधितज्ञापकत्वेन 'अबाधिताज्ञातज्ञापकत्वाभावेन आगमस्याप्रामाण्यमिष्यत एव। प्रत्यक्षविरोधे वाचोऽप्रामाण्यमिति तु नास्य वाक्यस्यार्थः। तत्र तु प्रत्यक्षस्य निश्चितप्रामाण्ये वाचश्चातत्परत्वे वाचोऽप्रामाण्यम्। प्रत्यक्षस्य प्रामाण्यसन्देहे वाचश्च तत्परत्वे प्रामाण्ये च निश्चिते देहात्मैक्यादौ प्रत्यक्षस्यैवाप्रामाण्यम्।

ननु पुराणादिवाक्यानां नागमत्वमिति चेन्न। निम्नोद्धृतप्रमाणभूतवाक्यैस्तेषां प्रामाण्यावगमात्। तथा हि—

'पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥'

(पद्मपुराण सृष्टिखण्ड अ० १०४)।

'य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खलु इतिहासपुराणस्य'

(न्यायदर्शनभाष्ये ४।१।६२)।

'कालेन ग्रहणं दृष्ट्वा पुराणस्य ततो नृप'।
व्यासरूपमहं कृत्वा संहरामि युगे युगे॥
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा॥
तथाऽष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रकाश्यते।'

(मत्स्यपुराणे ५३।८।१०)।

'श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ।
तत्र श्रौतं प्रमाणं तु तयोर्द्वैधे स्मृतिर्वरा ॥'

(का० स्मृ० १।४) ।

'सर्वज्ञात् सर्वशक्तेश्च मत्तो वेदः समुत्थितः ।
अज्ञानस्य ममाभावादप्रमाणा न च श्रुतिः ॥ इत्यादि

(देवीभाग० ११।१।२०-२६)

'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ।' (जै० सू० १।३।३) ।

'यथाविषयं प्रामाण्यम् इन्द्रियादिवत् । अन्यो मन्त्रब्राह्मणस्य विषयः, अन्यश्चेतिहासपुराणधर्मशास्त्राणाम् । यज्ञो मन्त्रब्राह्मणस्य विषयः । लोकवृत्तमितिहासपुराणस्य लोकव्यवहारस्थापनं धर्मशास्त्रस्य विषयः ('समारोपणादात्मन्यप्रतिषेधः' इति न्यायसूत्रीयभाष्ये) ।

प्रत्यक्षस्य सीमितविषयत्वेन अनुमानागमयोश्च असीमितविषयत्वेन प्रत्यक्षानधिगत दिक्कालादीनामनुमानागमगम्यत्वं युक्तमेव । यन्त्रादिसाहाय्येन प्रत्यक्षस्य बहुसूक्ष्मविषयत्वेऽपि तादृक्सूक्ष्मलिङ्गेनानुमानस्य ततोऽपि सूक्ष्मविषयत्वं युज्यत एव । यन्त्रादिज्ञाननिरपेक्षरव्यादिगत्यादिना यथा गत्यपेक्षयापि सूक्ष्मः कालोऽनुमीयते-तथैव यन्त्रादिसापेक्षज्ञातसूक्ष्मगत्यादिना ततोऽपि सूक्ष्मः कालोऽनुमीयत इति निर्विवादमेव । यथा स्थूलयापि दर्शनादिक्रियया अतीन्द्रियमिन्द्रियमनुमातुं शक्यम्, एवमेव स्थूलयापि गत्या सूक्ष्मः कालो विज्ञायते, सूक्ष्मया गत्या ततोऽपि सूक्ष्मः कालो ज्ञातुं शक्यः ।

प्रत्यक्षानुमानागम्यस्यापि सूक्ष्मस्यार्थस्य शास्त्रगम्यत्वेन सापेक्षनिरपेक्षो-भयविधोऽपि कालः शास्त्रगम्य एव । तदुक्तम्—

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥'

यद्यपि मधु-क्षीरद्राक्षादिमाधुर्यविशेषाभिव्यक्तये शब्दस्य व्यापारो न साफल्य-मुपयाति, तथापि लक्षणादिभिरतीन्द्रियब्रह्मादिसूक्ष्मतमतत्त्वमपि ज्ञातुं शक्यमेव । यथाधुनिकैरपि गणितादिसाध्यकालस्य शब्देनैव वर्णनं क्रियते, तथैव योगि-परमेश्वरादिज्ञानगिरस्याप्यर्थस्य शब्देन वर्णनं नासङ्गतम् । सर्वापेक्षयापि सूक्ष्मतम-धर्मब्रह्मादितत्त्वस्य वैदिकशब्दैकगम्यत्वमेव । अत एव सिद्धान्तशिरोमणौ तद्वास-नायाञ्च पुलस्त्य-वशिष्ठादिमुनिप्रोक्तस्यैव सूक्ष्मत्वमुक्तम्, तस्य शास्त्रैकगम्यत्वात् । यन्त्रादिदृक्समत्वापादकगणितस्य स्थूलत्वमेवोक्तम्—'स्थूलकृतं भानयनमित्यादि-सन्दर्भेण ।

'प्रत्यक्षदृष्ट्या बाधितत्वान्न लज्जसे' इत्यादिवचनमपि परीक्षितप्रत्यक्षविरोधे सति भ्रमप्रमादादिमतां मनुष्याणां वचनं न प्रामाण्यमर्हतीत्येतत्परमेव। नानाप्रापणीतागमस्य वेदवाक्यस्य वेदादिमूलकस्य व्यासादिमहर्षिवाक्यस्य च प्रत्यक्षविरोधेऽप्रामाण्यमित्येतत्परम्। तथात्वे 'अग्निहोत्रहोमात् यजमानः स्वर्गं गच्छती'ति वचनमपि प्रत्यक्षेण विरुद्ध्यते। प्रत्यक्षेण इहैव एतस्य भस्मीभावदर्शनात् होमादेः फलमनुत्पाद्यैव नष्टत्वाच्च।

यत्र ग्रहग्रहयुत्यादौ दृक्प्रत्ययो विहित तत्रैव युक्तियुक्तिमेवार्णम्।

ग्राह्यमित्यादिवचनं सार्थकम्॥ अत एध

'सुयुक्ता न मुन्युक्तिरप्यत्र शास्त्रो भवेत्कार्यं वर्यस्य यादृग्विरुद्धा।
प्रत्यक्षदृष्ट्या परिबाधितत्वान्न लज्जसेत्वं यवादपीत्थम्।'

भास्करोक्तमसद्रीत्या दृग्विरोधात् तदप्यसत्' इत्यप्यपास्तम् निर्णयसिन्ध्वादिनिन्धग्रन्थेषु बाणवृद्धिरसक्षयसिद्धान्ताभ्युपगमद्या तत्रैवादृष्टफलसिद्धयर्थं सूर्यसिद्धान्तस्यैवादराच्च। अत एव न भूपृष्ठयदृश्यनिषेधार्थम् तद्वचनम्। अत एव च 'निर्बीजार्कोक्तमेव हि' इत्यपि सङ्गलम् भार्गवोऽपि 'सूर्यांशपुरुषेणोक्तं तन्त्रम्' इत्यादिना निर्बीजं सूर्यांशपुरुषोक्तं तन्त्रमेव विध्यादिनिर्णयार्थमभ्युपैति।

यत्तूक्तम्–'तत्तद्गतिवशान्नित्यं यथा दृक्तुल्यतां ग्रहाः।
प्रयान्ति तत्प्रवक्ष्यामि स्फुटीकरणमादरात्॥ इति

सूर्यसिद्धान्ते बीजस्योक्तत्वात्, तदुक्ता तिथिरपि बीजसंस्कृतैव ग्राह्येति। तन्न; बोजाध्यायस्य सर्वैः प्रमिक्षिप्ततत्वाभ्युपगमात्। तस्य ग्रहणग्रहयुत्याद्यर्थं बीजसंस्कारस्याभ्युपेतत्वाच्च। स्कान्दे कलिमाहात्म्ये सूर्यांशजोक्तार्जितकाल एव कर्मणां कर्तव्यतोक्ता।

यदपि च—"चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत्।
तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य निर्णयम्॥
भगणेन समग्रेण ज्ञेया द्वादश राशयः।
त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते॥'

सेत्थं द्वादशभिर्भागैः सूर्यमुल्लङ्घितवती प्रथमा चन्द्रकला शृङ्गद्वयोपेता सूक्ष्मरेखाकारा शौक्ल्यमुपयाति। उत्तरोत्तरादिदिनेषु, सूर्यमण्डलतारतम्यानुसारेण शौक्ल्यमुपचीयते। अनेनैवंरीत्या मेचकत्वमुपचीयते, शौक्ल्यञ्चापचीयते"

